पण्डितराज श्रीस्नेहिरामजीशास्त्रि ( चिडावा-जयपुर ) स्मारकं—

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः ४२ कुसुमम्

श्रीयोगिराजभर्तृहरिविरचितं

( सचित्रं )

# नीतिशतकम्

श्रीगुरुप्रसादशास्त्रि ( विरचितया )

प्रथमपरीक्षोपयोगिन्या अभिनवराजलक्ष्मी संस्कृतटीकया,

भावबोधिन्या भाषाटीकया च विराजितम् ।

---

दुर्लभपरिशिष्टसहितश्च ।

[ सन् १९४८ की काशिकप्रथमपरीक्षा में पाठ्य,

अत्युत्तम सरल दो टीकाओं सहित ]।

---

प्रकाशकः

भार्गव पुस्तकालय गायघाट, बनारस ।

( ब्रांच—कचौड़ीगली, बनारस । )

पञ्चमसंस्करणम् २००० ]  १९४७ अगस्त  [ मूल्य १)

# प्रस्तावना

पण्डितवर महाराजाधिराज चिरजीवि योगिराज श्रीभर्तृहरि कृत यह 'नीतिशतक' नीति का उत्तम ग्रन्थ है। उत्तम उत्तम पद्यों में नीति का सार इसमें भली भांति निचोड़ कर रखा गया है। परन्तु इसके श्लोक गम्भीर व उपदेशप्रद अथच बड़े बड़े पण्डितों के भी मनन करने योग्य हैं। १९४७ की नई नियमावलि के अनुसार यह प्रथम परीक्षा में पाठ्य नियत है। परन्तु इसके श्लोकों की कठिनता तो देखने से ही प्रतीत होती है। अतः प्रथम परीक्षार्थी छात्रों को अवश्य ही कठिनता प्रतीत होगी। इस कठिनता को कुछ अंश में दूर करने के लिए अभिनवराजलक्ष्मी व भावबोधिनी नामक दो टीकासहित यह नीतिशतक का सचित्र पञ्चम संस्करण हमने प्रस्तुत किया है। इससे प्रथमपरीक्षार्थी छात्रों को विशेष लाभ होगा। क्योंकि टीकाओं में विशेषतः कोमल व प्रसन्न शब्दों का ही प्रयोग किया गया है। पर्याय भी प्रायः एक-एक शब्द के कई दिए गए हैं।

साथ ही प्राचीन हस्तलिखित प्रतियों के आधार पर परिशिष्ट श्लोक भी दिए गए हैं। श्लोकों का पाठ भी शुद्ध किया गया है। इस प्रकार यह पञ्चम संस्करण [illegible] दिया हुआ है। [illegible]



निवेदक—

श्रीगुरुप्रसादशास्त्री




श्रीमहागणपतये नमः

श्रीभर्तृहरिनृपतिविरचित

# नीतिशतकम्

श्रीगुरुप्रसादशास्त्रिविरचितयाऽभिनवराजलक्ष्म्या
भावबोधिन्याभाषाटीकया च विराजितम् ।

**दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।**
**स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ १ ॥**

[ अन्वयः ] दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये स्वानुभूत्येकमानाय शान्ताय तेजसे नमः ॥ १ ॥

[ विग्रहः ] चिदेव चिन्मात्रम् । चिन्मात्रं मूर्त्तिः—चिन्मात्रमूर्त्तिः । दिक् च कालश्च दिक्कालौ, दिक्कालावादी येषां ते दिक्कालादयः । न अवच्छिन्ना अनवच्छिन्ना । दिक्कालादिभिरनवच्छिन्ना अतएव अनन्ता चिन्मात्रमूर्त्तिर्यस्यासौ—दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्त्तिः, तस्मै । यद्वा चिन्मात्रं मूर्त्तिर्यस्येति बहुव्रीहिः । ततश्च दिक्कालाद्यनवच्छिन्नश्च अनन्तश्च चिन्मात्रमूर्त्तिश्च, तस्मै इति विग्रहः । स्वस्य अनुभूतिः—स्वानुभूतिः, स्वानुभूतिरेव एकं मानं ( प्रमाणं ) यस्यासौ—स्वानुभूत्येकमानः, तस्मै—स्वानुभूत्येकमानाय ।

[ राजलक्ष्मीः ] दिक्कालाद्यनवच्छिन्नाऽनन्तचिन्मात्रमूर्त्तये=दिग्देशकालाऽवस्थाद्यनवच्छिन्नाऽनन्तचिद्रूपाकृतये । [illegible] पिताऽनादिनिधननित्यकूटस्थचित्स्वरूपाय । स्वानुभूत्येकमानाय =

स्वानुभवमात्रवेद्याय । स्वतः प्रमाणाय । शान्ताय = शिवाय । तेजसे = ज्योतिषे । ज्योतिः स्वरूपाय । नमः = नमोऽस्तु ।

[ कोशः ] 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' इत्यमरः । 'कालो दिष्टोऽप्यनेहाऽपि समयः' इत्यमरः । 'स्त्रियां मूर्त्तिस्तनुस्तनूः' इत्यमरः ।

[ भावार्थः ] पूर्वादिदिग्भिरहरादिना कालेन बालाद्यवस्थाभिः शरीराद्युपाधिभिश्चानवच्छेद्यायाद्यन्तरहिताय स्वप्रकाशाय सच्चिदानन्दस्वरूपाय शान्ततमाय भगवते श्रीसाम्बसदाशिवाय, ब्रह्मणे, श्रीगणेशाय वा नमोनमः ।

[ भाषाटीका ] दिक् देश काल अवस्था रूप वर्ण आश्रम आदि उपाधियों से अविशेषित, व्यापक, सच्चिदानन्दस्वरूप, स्वयंप्रकाश, शान्तमूर्त्ति भगवान् साम्बसदाशिव को [ या ब्रह्म को या श्रीगणेशजी को ] हमारा प्रणाम हो ॥

**यां चिन्तयामि सततं मयि सा विरक्ता,**
**साप्यन्यमिच्छति जनं, स जनोऽन्यसक्तः ।**
**अस्मत्कृते च परितुष्यति काचिदन्या,**
**धिक्तां च, तं च, मदनं च, इमां च, मां च ॥ २ ॥**

[ अन्वयः ] याम् [ अहम् ] सततं चिन्तयामि सा मयि विरक्ता । सापि अन्यं जनम् इच्छति । स जनः अन्यसक्तः । अस्मत्कृते च काचिदन्या परितुष्यति ( अतः ) तां च तं च मदनं च इमां च मां च धिक् ।

[ विग्रहः ] विरज्यते स्म इति विरक्ता । अन्यस्मिन् जने, अन्यस्यां[1] प्रमदायां वा सक्तः=अन्यसक्तः । अस्माकं कृते—अस्मत्कृते ।

[ राजलक्ष्मीः ] यां = यां प्रियतमाम् । [ अहं = राजा भर्तृहरिरहम् ] । सततं = निरन्तरम् । चिन्तयामि = स्मरामि । विभावयामि । सा = सैव वरवर्णिनी । मयि—राजनि । विरक्ता = अननुरक्ता । उदासीना । अस्तीति शेषः । साऽपि = मयि पराङ्मुखतां दधाना मत्प्राणप्रियाऽपि । अन्यम्=मदतिरिक्तं कमपि जारम् । जनं=

१ अन्यस्यां सक्त इति विग्रहे तु 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावोऽनुसन्धेयः

साधारणं लोकम् । इच्छति = अभिलषति । स जनः = स खलु साधारणो जनः, मत्प्राणप्रियाजारोऽपि । अन्यसक्तः = इतरासक्तः । कामपि स्वप्रियतमामन्यांगणिकामभिवाञ्छति । अस्मत्कृते च = अस्मासु च । मयि च । काचिदन्या = मत्प्रियातिरिक्ता [ मत्प्रियोपपति-प्राथ्यमाना ] काऽपि सुन्दरी । परितुष्यति = अनुरज्यते । [ अतः ] तां च = अनुरक्तेऽपि मय्यननुरक्तां नीचासक्तां मत्प्रियाञ्च । तञ्च = स्वयमनुरक्तां राजमहिषीं विहाय सामान्ये गणिकाजनेऽनुरक्तं मत्प्रियाजारञ्च । मदनञ्च = सर्वानर्थमूलभूतं कामदेवञ्च । इमाञ्च = अननुरक्ते मय्यनुरक्तां गणिकाञ्च । माञ्च = अननुरक्तरमणीसमनुरक्तं माञ्च । धिक् = धिगस्तु ।

वसन्ततिलका वृत्तम् ! 'उक्ता वसन्ततिलका तभजा जगौ गः' इति च तल्लक्षणम् । 'मदनञ्च-इमा'—मित्यत्र संहिताया अविवक्षणात्सन्ध्यभावः ।

[ कोशः ] 'सततानारताश्रान्तसन्तताऽविरताऽनिशम्' इत्यमरः ।

[ भावार्थः ] यस्यामहमनुरक्तो याञ्च नक्तन्दिवं स्मरामि सा मामनादृत्याऽन्यस्मिन् साधारणे पुरुषेऽनुरज्यति । सोऽपि जनस्तामनादृत्यान्यस्यां गणिकायामनुरक्तः । साऽपि गणिका तमनादृत्य मय्येवानुरागं भजते, मुहुर्मुहुर्मां प्रार्थयते च । सर्वमेतन्मदनस्य विजृम्भितमतस्तां महिषीं, तं पुरुषं, तं कामदेवं, कामर्दितां तां गणिकां, मां च तदननुरक्तं धिक् ।

( भाषाटीका ) जिसका मैं रात दिन स्मरण करता हूं वह मेरी स्त्री मेरे को नहीं चाहती है, एवं किसी अन्य पुरुष को चाहती है । वह पुरुष भी मेरी स्त्री को नहीं चाहता है, परन्तु किसी अन्य स्त्री ( वेश्या ) को चाहता है । वह स्त्री (वेश्या) भी उस पुरुष को नहीं चाहती है, किन्तु वह मेरे ही ऊपर आसक्त है । अतः मेरी स्त्री को, उस पुरुष को, कामदेव को, इस वेश्या को, तथा साथ ही मेरे को भी धिक्कार है, जो इस प्रकार मायाके भँवरजाल में पड़ कर जीवन व धर्म नष्ट कर रहे हैं ॥ २ ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ॥ ३ ॥

[ अन्वयः ] अज्ञः सुखमाराध्यः विशेषज्ञः सुखतरमाराध्यते । ज्ञानलवदुर्विदग्धं नरं ब्रह्मापि न रञ्जयति ।

[ विग्रहः ] जानातीति ज्ञः । न ज्ञः—अज्ञः । आराधयितुं शक्य आराध्यः । अतिशयितुं सुखं सुखतरम् । तद्यथा स्यात्तथा । विशेषेण जानातीति विशेषज्ञः । ज्ञानस्य लवः–ज्ञानलवः, ज्ञानलवेन–दुर्विदग्धः–ज्ञानलवदुर्विदग्धः, तं–ज्ञानलवदुर्विदग्धम् ।

[ राजलक्ष्मीः ] अज्ञः = मूढः । मूर्खः । सुखं = सुखं यथा स्यात्तथा । अनायासेनैव । आराध्यः = आराधयितुं शक्यः । रञ्जयितुं शक्यः । हेलया सेवितुं शक्यः । विशेषज्ञः = तत्त्वदर्शी तु । पण्डितस्तु । सुखतरम् = परमसुखेन । नितरामनायासेन । आराध्यते = सेव्यते । अनुकूलतां नीयते । किन्तु ज्ञानलवदुर्विदग्धं = ज्ञानलेशदृप्तन्तु । स्वल्पज्ञानगर्वितमानसन्तु । नरं = पुरुषम् । ब्रह्मापि = विधिरपि । साक्षात् पितामहोऽपि । न रञ्जयति = न प्रसादयति । नानुकूलयितुं शक्नोति ।

[ कोशः ] 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः' इत्यमरः । 'लवलेशकणाऽणवः' इत्यमरः ।

[ भावार्थः ] मूर्खः सुखं वशीकर्तुं शक्यः, पण्डितस्तु नितरामनायासेनानुकूलयितुं शक्यः । परन्तु पण्डितंमन्यं स्वल्पज्ञानगर्वितमानसं नरं तु ब्रह्माऽपि न प्रसादयितुं शक्नोति, का कथा मनुष्याणाम् ।

( भाषाटीका ) जो मूर्ख हैं उनको जल्दी ही समझाया जा सकता है । जो विवेकी पण्डित हैं वे तो तुरन्त ही प्रसन्न किए जा सकते हैं । परन्तु जो थोड़े टेढ़े–सीधे दो अक्षर सीख जाने से घमण्ड में चूर हैं उन्हें तो स्वयं ब्रह्माजी भी नहीं समझा सकते मनुष्य की तो बात ही क्या है ! अर्थात्–बिना पढ़े लिखे लोगों को

या पण्डित को समझाना सम्भव है, पर अपने को पण्डित समझने वाले अधक-चरेनीमहकीम-जो सब से भयङ्कर होते हैं, उनको समझाना व प्रसन्न करना तो नितान्त असम्भव है ॥ ३ ॥

[ खलनिन्दा ]

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रान्तरा-
त्समुद्रमपि सन्तरेत्प्रचलदूर्मिमालाकुलम् ।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥४॥

[ अन्वयः ] मकरवक्त्रदंष्ट्रान्तरात् मणिम् प्रसह्य उद्धरेत्, प्रचलदूर्मिमा-लाकुलं समुद्रमपि सन्तरेत्, कोपितं भुजङ्गमपि शिरसि पुष्पवत् धारयेत् । तु—प्रतिनिविष्ट—मूर्खजन—चित्तं न आराधयेत् ।

[ विग्रहः ] मकरस्य वक्त्रं मकरवक्त्रं, मकरवक्त्रस्य दंष्ट्राः, मकरवक्त्रदंष्ट्राः, मकरवक्त्रदंष्ट्राणामन्तरं-मकरवक्त्रदंष्ट्रान्तरं, तस्मात् । [ दंष्ट्राङ्कुरादिति पाठे दंष्ट्रैवाऽङ्कुरसादृश्यादङ्कुरः, तस्मादिति विग्रहः ] । प्रचलन्त्यश्च ता ऊर्मयश्च प्रच-लदूर्मयः । तासां मालाः—प्रचलदूर्मिमालाः, प्रचलदूर्मिमालाभिराकुलः-प्रचलदूर्मि-मालाकुलः, तं-प्रचलदूर्मिमालाकुलम् । पुष्पमिव पुष्पवत् । मूर्खश्चासौ जनश्च मूर्खजनः, प्रतिनिविष्टश्चाऽसौ मूर्खजनश्च—प्रतिनिविष्ट-मूर्खजनः, तस्य चित्तं—प्रति-निविष्टमूर्खजनचित्तं, तत्तथाभूतम् ।

[ राजलक्ष्मीः ] मकरवक्त्रदंष्ट्रान्तरात् = ग्राहमुखस्थदंष्ट्रान्तराला-दपि । भीषणजलजन्तुमुखदन्तमध्यादपि । मणिं = रत्नम् । मुक्तादिरत्ना-नीति यावत् । प्रसह्य = सहसा । बलात्कारेण । उद्धरेत् = समुद्धरेत् । किञ्च-प्रचलदूर्मिमालाकुलं = प्रसर्पत्कल्लोलपङ्क्तिभीषणम् । समुद्रमपि= सागरमपि । सन्तरेत् = उडुपादिना प्लवेत । कल्लोलमालासङ्कुलस्य सा-गरस्य सन्तरणमपि कुर्यात् । कोपितं = क्रोधितं भुजङ्गमपि = दर्वीकर-मपि । सर्पमपि । शिरसि = मस्तके । पुष्पवत् = कुसुमावलिमिव । धा-

रयेत् = स्थापयेत् । विनिवेशयेत् । तु = परन्तु । प्रतिनिविष्टमूर्खजनचित्तम् = आग्रहाविष्टखललोकमानसम् । नाराधयेत् = न सेवेत । न शुश्रूषेत् । पृथ्वी वृत्तम् । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु' रिति लक्षणात् ।

[ कोशः ] 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इत्यमरः । 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इत्यमरः । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः,' इत्यमरः । 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः' इत्यमरः ।'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गम' इत्यमरः ।

[ भावार्थः ] धनादिकमिच्छन्नुद्योगपरायणो वीरो जलजन्तुकरालमुखगह्वरादपि मण्यादिकं समुद्धर्तुं प्रयतेत,आवर्त्तकल्लोलादिभीषणसमुद्रलङ्घनेऽपि मनो विनिवेशयेत्, लोकानुरञ्जनार्थं सर्पमपि शिरसि निधाय धनोपार्जनाय प्रयतेत । अन्यान्यपि वा साहसानि कुर्वीत । परन्तु कदाचिदपि दुष्टलोकानुरञ्जनसाहसं न विदधीत । दुराराध्या हि खलाः ।

[ भाषाटीका ] धन के लिए मगरमच्छ घड़ियाल आदि भयङ्कर जलजन्तुओं की दाढ़ों ( जाड़ों ) के बीच से भी मणियों ( मोती मूगा आदि रत्नों ) को निकालने का काम करना पड़े तो वह भी अच्छा, बड़ी बड़ी लहरों से व्याप्त भयङ्कर समुद्र को पार करना पड़े तो वह भी उत्तम है, सपेरा बन के क्रोधित सांप को पकड़कर शिर पर माला की तरह रखना पड़े तो वह भी उत्तम है । परन्तु कभी भी आग्रही ( जिद्दी ) मूर्खों की खुशामद कर धन उपार्जन करने का साहस न करे ॥ ४ ॥

लभेत सिकतासु तैलमपि यत्नतः पीडय-
न्पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ्छशविषाणमासादये—
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥

[ अन्वयः ] पीडयन् सिकतासु अपि तैलम् लभेत, पिपासार्दितः मृगतृष्णिकासु सलिलं पिबेच्च। (भूवलयं--) पर्यटन् शशविषाणमपि कदाचित् आसादयेत्। तु--प्रतिनिविष्टमूर्खजनचित्तं न आराधयेत्।

[ विग्रहः ] मृगाणां तृष्णाऽस्त्यासु ताः मृगतृष्णाः। मृगतृष्णा एव मृगतृष्णिकाः, तासु मृगतृष्णिकासु। पातुमिच्छा पिपासा, पिपासयाऽर्दितः पिपासाऽर्दितः। शशस्य विषाणं शशविषाणम्, तत्। प्रतिनिविष्टानां मूर्खजनानां चित्तं तत्तथाभूतम्।

[ राजलक्ष्मीः ] यत्नतः = प्रयत्नात्। उपायविशेषात्। पीडयन् = मर्दयन्। सिकतास्वपि = बालुकास्वपि। तैलं = स्नेहम्। आसादयेत् = लभेत। पिपासार्दितः = तृषातुरो जनः। मृगतृष्णिकासु = मृगमरीचिषु। सलिलं = जलम्। पिबेच्च = पातुं शक्नुयाच्च। 'भूवलयं--] पर्यटन् = भ्राम्यन्। शशविषाणमपि = शशशृङ्गमपि। कदाचित् = दैववशात्कस्मिंश्चित्काले। आसादयेत् = प्राप्नुयात्। तु = किन्तु। प्रतिनिविष्टमूर्खजनचित्तम् = दुराग्रहाविष्टखलजनमानसम्। नाराधयेत् = न सेवेत। तदाराधनप्रयासं न कुर्यादित्यर्थः। पृथ्वी वृत्तम्।

[कोशः] 'मृगतृष्णा मरीचिका' इत्यमरः। 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' इत्यमरः। 'पशुशृङ्गे मदन्तयोः, क्लीबे विषाणम्' इतिमेदिनी। 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः।

[ भावार्थः ] प्रयत्नविशेषवशात्कश्चित्कुशलो बालुकास्वपि कदाचित्तैलं लभेत, पिपासितो मृगतृष्णास्वपि कदाचिज्जलं लभेत, पर्यटन्कश्चित्कदाचिच्छशविषाणमपि प्राप्नुयात्। परं क्रूरहृदयनीचजनचित्तानुवृत्त्या कदाचिदपि फलं न लभते। अतो मूर्खाराधनं सर्वथा त्याज्यमेव।

[ भाषाटीका ] कोई कुशल आदमी प्रयत्न करके बालू से भी ( जिससे कभी तैल नहीं निकलता उससे भी ) कदाचित् तैल प्राप्त कर सकता है। किसी उपाय से पथिक को मृगतृष्णा (बालुका में जल की भ्रान्ति) से भी कदाचित् जल मिल सकता है। कोई घूमता हुआ खरगोश के शिर से सींग[1] ( जो वस्तु जगत्

---

१ खरगोश ( खरहे ) के शिर पर कभी सींग नहीं होता।

में है ही नहीं उसे ) भी पा सकता है, परन्तु दुराग्रही दुष्टलोगों के मन को प्रसन्न करना सर्वथा असम्भव है। अतः दुष्टों की सेवा न करे ॥ ५ ॥

**व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते**
**छेत्तुं वज्रमणीञ्छिरीषकुसुमप्रान्तेन सन्नह्यते ।**
**माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते**
**नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः ॥६॥**

[ अन्वयः ] यः खलान् सुधास्यन्दिभिः सूक्तैः, सतां पथि नेतुं वाञ्छति असौ बालमृणालतन्तुभिः व्यालं रोद्धुं समुज्जृम्भते, शिरीषकुसुमप्रान्तेन वज्रमणीन् छेत्तुं सन्नह्यते, मधुबिन्दुना क्षाराम्बुधेः माधुर्यं रचयितुमीहते ।

[ विग्रहः ] मृणालानि तन्तव इव मृणालतन्तवः, बालाश्च ते मृणालतन्तवश्च बालमृणालतन्तवः, तैः–बालमृणालतन्तुभिः । वज्राण्येव मणयः–वज्रमणयः, तान् वज्रमणीन् । शिरीषस्य कुसुमं, शिरीषकुसुमं, शिरीषकुसुमस्य प्रान्तः–शिरीषकुसुम-प्रान्तः, तेन शिरीषकुसुमप्रान्तेन । मधुरस्य भावः माधुर्यं, तत्–माधुर्यम् । मधुनो बिन्दुः मधुबिन्दुः । तेन मधुबिन्दुना । क्षारश्चासावम्बुधिश्च क्षाराम्बुधिः, तस्य क्षाराम्बुधेः । सुधां स्यन्दन्ते तच्छीलानि सुधास्यन्दीनि । तैः–सुधास्यन्दिभिः ।

[ राजलक्ष्मीः ] यः = पुमान् । खलान् = दुर्जनान् । दुष्टान् । सुधास्यन्दिभिः = अमृतवर्षिभिः । पीयूषवर्षिभिः । सुधास्राविभिः । सूक्तैः = सुभाषितैः । सतां पथि = सज्जनानुमते मार्गे । सन्मार्गे । नेतुं = प्रापयितुम् । स्थापयितुम् । वाञ्छति = समीहते । असौ = असौ पुमान् । बालमृणालतन्तुभिः = कमलनालगर्भस्थकोमलबिसतन्तुभिः । व्यालं = दुष्टगजम् । मदोन्मत्तं हस्तिनम् । रोद्धुम् = अवरोद्धुम् । सन्नियन्तुम् । समुज्जृम्भते = आयस्यति । प्रयत्नं विधत्ते । मृणालतन्तुजालेन व्यालं [दुष्टहस्ति] बन्धनप्रयासवत्स तस्य प्रयासो वृथैवेत्याशयः । [किञ्चासौ–] शिरीषकुसुमप्रान्तेन = कोमलतरशिरीषप्रसूनाग्रभागेन । वज्रमणीन् =

हीरकमणीन्। हीरकमणिखण्डान्। छेत्तुं=भेत्तुम्। संनह्यते=प्रयतते। प्रयासं कर्त्तुं परिकरबन्धं करोति। [ किञ्च असौ—] मधुबिन्दुना=माक्षिकबिन्दुना। क्षाराम्बुधेः = लवणार्णवस्य। क्षारसमुद्रस्य। माधुर्यं = मधुरताम्। मिष्टजलताम्। रचयितुं= कर्त्तुम्। ईहते = चेष्टते ॥ ६ ॥

[ भावार्थः ] दुष्टजनानमृतमधुरैः सुभाषितैः सन्मार्गे नेतुं यः प्रयासं करोति तस्य पुंसः स खलु प्रयासो-मृणालतन्तुजालेन दुष्टगजबन्धनप्रयासवत्, कोमलतरशिरीषाख्यप्रसूनाग्रभागेन कठोरतर वज्रमणिखण्डच्छेदने यः खलु प्रयासस्तद्वत्, क्षारसागरस्य मधुबिन्दुना मिष्टजलत्वसम्पादने यः प्रयत्नस्तद्वच्च निरर्थक एव। नहि दुष्टा मधुरैर्वचोभिः प्रसादयितुं शक्याः।

[ कोशः ] 'व्यालो दुष्टगजे सर्पे'—इति मेदिनी। 'मृणालं बिसम्' इत्यमरः। 'शिरीषस्तु कपीतनः' इत्यमरः। 'सूत्राणि नरि तन्तवः' इत्यमरः। 'पिशुनो दुर्जनः खलः' इत्यमरः। 'पीयूषममृतं सुधा'—इत्यमरः।

( भाषाटीका ) जो मनुष्य अपने मधुर सुन्दर सरस सुभाषितों से दुष्टों को समझाकर अच्छे मार्गपर लाना चाहता है वह मानों कमल की दण्डी के भीतर से निकलने वाले मृणालरूपी तन्तुओं से मत्त ( पागल ) हाथी को बान्धना चाहता है, शिरीष ( 'शिरस' 'हरसिंगार' या 'परिजाता' ) के पुष्प के अगले भाग से वज्रमणि ( हीरे ) में छेद करना—चाहता है, सहत की एक बून्द से समुद्र के खारे जलको मीठा करना चाहता है। अर्थात् जैसे मृणालतन्तु आदि से मस्तहाथी आदि को बान्धना असम्भव है वैसे ही सदुपदेश द्वारा दुष्टों को रास्ते पर लाना भी असम्भव ही है ॥ ६ ॥

स्वायत्तमेकान्तगुणं विधात्रा
विनिर्मितं छादनमज्ञतायाः।
विशेषतः सर्वविदां समाजे
विभूषणं मौनमपण्डितानाम् ॥ ७ ॥

[ अन्वयः ] स्वायत्तम् एकान्तगुणम् अज्ञतायाः छादनं —विशेषतः सर्वविदां समाजे अपण्डितानां विभूषणं—मौनं विधात्रा विनिर्मितम् ।

[ विग्रहः ] स्वस्यायत्तं स्वायत्तम् । एकान्तम् गुणा यस्य तत्-एकान्तगुणम् । विधत्ते इति विधाता, तेन विधात्रा । अज्ञस्य भावः अज्ञता, तस्या अज्ञतायाः । सर्वं विदन्तीति सर्वविदः, तेषां सर्वविदाम् । विभूष्यतेऽनेन इति विभूषणम् । मुनेर्भावो मौनम् । न पण्डिताः अपण्डितास्तेषाम्—अपण्डितानाम् ॥

[ राजलक्ष्मीः ] स्वायत्तं = स्वाधीनम् । एकान्तगुणम् = अमोघम् । सर्वथा गुणकारि । अज्ञतायाः = अज्ञानस्य । मूर्खतायाः । जाड्यस्य । छादनम् = आवरणम् । विशेषतः = विशेषेण । किञ्चेति यावत् । सर्वविदां=सर्वशास्त्रनिष्णातानां विदुषाम् । समाजे = सभायाम् । अपण्डितानां=मूर्खाणाम् । विभूषणं = भूषणम् । अलङ्कारोपमम् । मौनं = तूष्णीम्भावो नाम । विधात्रा = ब्रह्मणा । विनिर्मितम्=विरचितम् । आविष्कृतमस्ति । इन्द्रवज्रा नाम वृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति तल्लक्षणम् ।

[ भावार्थः ] स्वायत्तममोघं जाड्यस्यावरणम् मौनं नाम महौषधं मूर्खाणां हिताय ब्रह्मणा निर्मितं नु । किञ्च विशेषतो विदुषां समवाये मौनमेव मूर्खाणामाभरणम् ।

[ कोशः ] 'अधीनो निघ्न आयत्तः' इत्यमरः । 'तीव्रैकान्तनितान्तानि गाढबाढदृढानि च' इत्यमरः ।

( भाषाटीका ) ब्रह्माजी ने मूर्खों के हित के लिए ही मूर्खता को ढकने वाला, हर समय अपने पास रहने वाला, सदा गुण करने वाला ( राम बाण ) मौन नामक औषध बनाया है । विशेष करके सर्वज्ञ पण्डितों की सभा में तो यह मौन ही मूर्खों का भूषण है ॥ ७ ॥

( स्वाभिमानं निरस्यति— )

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।

**यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं**
**तदा 'मूर्खोऽस्मी'ति ज्वर इव मदो मे व्यपगतः ॥ ८ ॥**

[ अन्वयः ] यदा अहं किञ्चिज्ज्ञः द्विप इव मदान्धः समभवं तदा 'सर्वज्ञोऽस्मि' इति मम मनः अवलिप्तमभवत्। यदा बुधजनसकाशात् किञ्चित् किञ्चित् अवगतं तदा 'अहं मूर्खोऽस्मि' इति मे मदः ज्वर इव व्यपगतः।

(विग्रहः) किञ्चिज्जानातीति किञ्चिज्ज्ञः मदेनाऽन्धः मदान्धः। सर्वं जानातीति सर्वज्ञः। बुधाश्च ते जनाश्च बुधजनाः, तेषां सकाशस्तस्मात् बुधजनसकाशात्।

[ राजलक्ष्मीः ] यदा = यस्मिन्समये। अहम्—अयमहम्। किञ्चिज्ज्ञः = यत्किञ्चिदवबोद्धा। स्वल्पज्ञः। द्विप इव = गज इव। मन्दान्धः = अभिमानोपहतदृष्टिः। गर्वान्धः। कर्त्तव्याऽकर्त्तव्यज्ञानशून्यः। ( गजपक्षे—मदान्धः = मदमलिनगण्डस्थलतयोपहतदृष्टिः ) । समभवम् = सञ्जातः। तदा = तस्मिन्काले। सर्वज्ञोऽस्मीति = सर्वविदहं विद्वन्मूर्धन्यः संवृत्तोऽस्मीति विभाव्य। मम = मदीयं। मनः = चित्तम्। अवलिप्तं = दृप्तम्। गर्वोद्धुरम्। अभवत् = समजायत। यदा = यदा तु! बुधजनसकाशात्=पण्डितजनसम्पर्कात्। गुरुशुश्रूषणादिभिः। किञ्चित्किञ्चित = ईषदीषत्। स्वल्पतमम्। अवगतम् = अधिगतम्। ज्ञातम्। अधीतम्। तदा = तस्मिन्नेव समये। अहं मूर्खोऽस्मि = अहं किमपि न जानामि, सर्वथा मूर्ख एवास्मि। इति = इति हेतोः। इत्थं निश्चयादिति यावत्। मे = मम। मदः = गर्वः। ज्वर इव = ज्वरवत्। व्यपगतः = विनष्टः। विलुप्तः। शिखरिणी वृत्तम्। 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी'ति तल्लक्षणात्।

[ भावार्थः ] यदाऽहमसेवितगुरुचरणो यत्किञ्चिज्ज्ञ आसन्तदा 'सर्वज्ञोऽह'मिति धिया मदान्धो जातः, परं यदा विद्वज्जनसंसर्गाद्गुरुशुश्रूषादिभिश्च किञ्चि-

दधीतवान्, तदा विहितवेद्यतया शास्त्राणां गाम्भीर्यादिकं, विषयस्य गौरवञ्च वीक्ष्य, स्वस्याल्पज्ञताञ्च विचार्य, मूर्खोऽस्मीति निश्चितवान्। तेन च मे मदोऽपि ज्वर इव विनष्टश्च।

( कोशः ) 'दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः' इत्यमरः। 'दर्पोऽवलेपोऽवष्टम्भः' इत्यमरः। 'मदो दानम्' इत्यमरः।

[ भाषाटीका ] जब मुझे शास्त्रों का अधिक ज्ञान नहीं था, किन्तु थोड़ी बहुत इधर उधर की बात जानता था तो उस समय में अपने को सर्वज्ञ समझता था। और मेरा मन मस्त हाथी की तरह घमण्ड में चूर हो रहा था। परन्तु जब मैं विद्वानों की सेवा करने से शास्त्रों के भीतर प्रवेश कर शास्त्रों के रहस्य को कुछ २ जानने लगा तब मेरी आँखें खुली, और मुझे मालूम हुआ कि मैं तो अभी कुछ भी नहीं जानता हूँ, 'मैं तो बिलकुल मूर्ख ही हूँ'। इस प्रकार मेरा वह घमण्ड ज्वर की तरह छूट गया ॥ ८ ॥

**कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं**
**निरुपमरसप्रीत्या[1] खादन्नरास्थि निरामिषम्।**
**सुरपतिमपि श्वा पार्श्वस्थं विलोक्य विशङ्कते[2]**
**नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ९ ॥**

[ अन्वयः ] कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं निरामिषं नरास्थि निरुपमरसप्रीत्या खादन् श्वा पार्श्वस्थं सुरपतिमपि विलोक्य विशङ्कते। हि क्षुद्रो जन्तुः परिग्रहफल्गुतां न गणयति।

[ विग्रहः ] कृमीणां कुलानि, कृमिकुलानि, कृमिकुलैश्चितं-कृमिकुलचितं, तत्। लालया क्लिन्नं—लालाक्लिन्नम्, तत्तथाभूतम्। विगतो विकृतो वा गन्धो विगन्धः, विगन्धोऽस्यास्तीति विगन्धि, तत्। निरुपमो रसो यस्य तत्, तस्मिन्

---

१ 'रसं प्रीत्या' पाठान्तरम्।

२ 'न शङ्कते' इति पाठे—न शङ्कते इति न, किन्तु शङ्कते एवेति काक्वा योज्यम्। 'न शङ्कते-ततो न बिभेती'त्यन्ये।

याप्रीतिस्तया । नरस्यास्थि, तत् । आमिषान्निर्गतं निरामिषम् । निर्गतमामिषं यस्मात्तत्तथाभूतमिति वा । सुराणां पतिः सुरपतिः, तं सुरपतिम् । पार्श्वे तिष्ठतीति पार्श्वस्थः, तं पार्श्वस्थम् । फल्गुनोभावः–फल्गुता । परिग्रहस्य फल्गुता–परिग्रहफल्गुता, ताम् परिग्रहफल्गुताम् ।

[ राजलक्ष्मीः ] कृमिकुलचितं=कीटसमूहव्याप्तम् । कीटावलिकलितम् । लालाक्लिन्नं=लालाजलार्द्रम् । स्यन्दिनीजलाविलम् । विगन्धि=दुर्गन्धदूषितम् । जुगुप्सितं–निन्दितम् । घृणितम् । निरामिषं=मांसशून्यम् । नरास्थि=मनुष्यकीकसम् । निरुपमरसप्रीत्या=सरसपदार्थस्नेहेन । खादन्=भक्षयन् । श्वा=कुक्कुरः । पार्श्वस्थं=निकटस्थितम् । सुरपतिमपि=देवराजमिन्द्रमपि । विलोक्य=दृष्ट्वा । विशङ्कते=आशङ्कते । 'किमयं मदीयमिदं स्वादुरसं नरास्थि ग्रहीतुमायातः' इति शङ्कते । हि=निश्चयेन= । क्षुद्रः–नीचः । जन्तुः=प्राणी । परिग्रहफल्गुतां=स्वकीयोपकरणक्षुद्रताम् । स्ववस्तुतुच्छताम् । न गणयति=नाकलयति । न विभावयति । आत्मनो नीचतां, स्ववस्तुषु क्षुद्रताञ्च न गणयति, किन्तु आत्मानं महान्तं मन्यते । हरिणीवृत्तम् । 'रसयुगहयैन्सौ म्रौ स्लौ गो यदा हरिणी तदेगति लक्षणात् ।

[ भावार्थः ] पूतगन्धि नीरसं निर्मांसं कीकसं सरसवस्तुवत्प्रीत्या खादन् कुक्कुरः सुरपतिमपि पार्श्वस्थं दृष्ट्वा 'कदाचिदयं मद्भक्ष्यमिदमस्थि न गृह्णीया'-दिति शङ्कते । नीचो जनः स्वपरिग्रहक्षुद्रतां नानुसन्धत्ते स्वं च महान्तं मन्यते ।

[ कोशः ] 'सृणीका स्यन्दिनी लाला' इत्यमरः । 'आर्द्रं सान्द्रं क्लिन्नम्' इत्यमरः । 'प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः' इत्यमरः । 'परिग्रहः परिजने पत्न्यां स्वीकारमूल्ययोः । शापे' इति मेदिनी ।

( भाषाटीका ) जिसमें कीड़े लगे हुए हैं, मक्खियाँ भिन-भिना रही हैं, लाला ( लार ) से चिप-चिपा हो रहा है, जिसमें दुर्गन्ध आ रही है, जिसे देखते ही घृणा होती है, जिसमें कोई रस नहीं है, मांस भी जिस पर नहीं रह गया है

ऐसी मनुष्य की हड्डी को बड़े चाव से खाता हुआ कुत्ता अपने पास में खड़े हुए साक्षात् इन्द्र को भी देख कर मन में शङ्कित होता है कि-कहीं यह (इन्द्र) मेरी इस हड्डी को—उत्तम खाद्य को—छीन न ले ! ठीक भी है नीच लोग अपनी तुच्छता व अपनी वस्तुओं की हीनता का ख्याल नहीं करते। अर्थात् अपनी हीनता को वे लोग ख्याल न कर सभी को शङ्का की दृष्टि से देखते हैं॥९॥

**शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः[1] क्षितिधरं,**
**महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।**
**अधोऽधो गङ्गेयं[2] पदमुपगता स्तोकमथवा**
**विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥**

[ अन्वयः ] इयं गङ्गा स्वर्गात् शार्वं शिरः उपगता, पशुपतिशिरस्तः क्षितिधरम् [ उपगता ] इत्थम् उत्तुङ्गात् महीध्रात् अवनिम् ( उपगता )। अवनेश्चापि जलधिम् ( उपगता ।) [इत्थम् ] अधोऽधः स्तोकं पदमुपगता। अथवा विवेकभ्रष्टानां शतमुखः विनिपातः भवति।

[ विग्रहः ] शर्वस्येदं शार्वम्। पशुपतेः शिरः पशुपतिशिरः, तस्मात् पशुपतिशिरस्तः। धरतीति धरः,क्षितेः धरः—क्षितिधरः, तं क्षितिधरम्। महीं धरतीति महीध्रः, तस्मात्। विवेकाद्भ्रष्टाः। विवेकभ्रष्टाःतेषां—विवेकभ्रष्टानाम्। शतं मुखानि यस्यासौ शतमुखः।

[ राजलक्ष्मीः ] इयं गङ्गा=इयं भागीरथी गङ्गा। स्वर्गात्—सुरलोकात्। शार्वं=भगवतः शिवस्य सम्बन्धि। शिरः=मस्तकम्। 'उपगता=प्राप्ते'ति शेषः। पशुपतिशिरस्तः=शिवशिरसः सकाशाच्च। क्षितिधरं=हिमालयपर्वतम्। 'उपगते'ति शेषः। उत्तुङ्गात्=उन्नतात्। महीध्रात्=हिमवत्पर्वतात्। अवनिम्=पृथ्वीम्। 'उपगते' ति शेषः।

१ 'स्वर्गात्पतति शिरसस्तत्क्षितिधर' मिति पाठान्तरम्।
२ 'अथो सेयं गङ्गा' इति पाठान्तरम्।

अवनेश्चापि = पृथिव्याश्चापि सकाशात्। जलधिं = समुद्रम्। 'उपगते'ति शेषः। [ इत्थमियं गङ्गा ] अधोऽधः = नीचैरवतरणक्रमेण। स्तोकं = तुच्छं। पदं = स्थानम्। उपगता = प्राप्ता। अथवा = यतः। किं वा विवेकभ्रष्टानां = विवेकविकलानाम्। शतमुखः = नानाविधः। विनिपातः = अधःपातः। भवति = जायते।

'पतति शिरसस्तत्क्षितिधर' मिति पाठे तु—इयं गङ्गा स्वर्गात् शार्वं शिरः पतति। तत् = तस्मात्, शिरसः = शिवमस्तकात्, क्षितिधरं = हिमवन्तं पर्वतं, [ पतति ]। उत्तुङ्गान्महीध्रात् अवनिं पतति, अवनेश्चापि जलधिं पतति,—इत्येवं रीत्याऽन्वयो बोध्यः। 'अथो सेयं गङ्गे'ति पाठे—अथो = इत्थम्। अमुना प्रकारेण। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः।

[ भावार्थः ] भगवती गङ्गा स्वर्गाच्छिवशिरः, ततो हिमवन्तं, ततो धरित्रीतलं, ततश्च जलनिधिमुपगता। एवमेव ये विवेकभ्रष्टास्तेऽप्युन्नतेभ्यः पदेभ्यो नीचैर्गच्छन्ति। अतो मनुष्येण विवेकवता भाव्यम्।

[ कोशः ] 'ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः' इत्यमरः। 'महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः' इत्यमरः।

[ भाषाटीका ] भगवती गङ्गा स्वर्गलोक से पहिले शिवजी के शिर पर गिरीं, तब वहाँ से भी हिमालय पर्वत के शिखर पर गिरीं, वहाँ से भी पृथ्वी पर गिरीं, वहाँ से भी समुद्र में जाकर गिरीं। इस प्रकार महाराणी गङ्गा क्रमशः नीचे ही गिरती गईं। ठीक भी है, और जो विवेक (ज्ञान) शून्य हो जाता है—उसका इसी प्रकार अधः पतन होता है॥ १०॥

शक्यो वारयितुं जलेन हुतभुक्छत्रेणसूर्यातपो,
नागेन्द्रो निशिताङ्कुशेन समदो, दण्डेन गोगर्दभौ।
व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं,
सर्वस्यौषधमस्ति शास्त्रविहितं, मूर्खस्य नास्त्यौषधम् ११

[ अन्वयः ] हुतभुक् जलेन वारयितुं शक्यः । छत्रेण सूर्यातपः [ वारयितुं शक्यः ]। समदः नागेन्द्रः निशिताङ्कुशेन [ वारयितुं शक्यः ]। दण्डेन गोगर्दभौ [ वारयितुं शक्यौ ] । व्याधिः भेषजसङ्ग्रहैश्च [ वारयितुं शक्यः ] । च विषं विविधैर्मन्त्रप्रयोगैर्वारयितुं शक्यम् । ( इत्थं ) सर्वस्य शास्त्रविहितम् औषधमस्ति । ( किन्तु ) मूर्खस्यौषधं नास्ति ।

[ विग्रहः ] हुतं भुङ्क्ते हुतभुक् । सूर्यस्यातपः सूर्यातपः । नागानामिन्द्रः नागेन्द्रः । निशितश्चासावङ्कुशश्च निशिताङ्कुशः, तेन निशिताङ्कुशेन । मदेन सहितः समदः । गौश्च गदर्भश्च गोगर्दभौ । भेषजानां सङ्ग्रहाः भेषजसङ्ग्रहाः, तैः भेषजसङ्ग्रहैः । मन्त्राणां प्रयोगाः–मन्त्रप्रयोगाः, तैः–मन्त्रप्रयोगैः । शास्त्रेण विहितं–शास्त्रविहितम् ।

[ राजलक्ष्मीः ] हुतभुक् = अग्निः । वह्निः । जलेन = वारिणा । वारयितुं = शमयितुं । शक्यः=शक्यते । सूर्यातपः=सूर्यघर्मश्च । सूर्यसन्तापश्च । छत्रेण=आतपत्रेण । [ वारयितुं शक्यः । तथा ] समदः = मदमत्तः। नागेन्द्रः=गजेन्द्रः । निशिताङ्कुशेन = तीक्ष्णाङ्कुशेन । [वारयितुं शक्यः । तथा ] गोगर्दभौ = वृषखरौ । बलीवर्दगर्दभौ । दण्डेन = लगुडेन । [ वारयितुं शक्यौ ] । [ किञ्च ] । व्याधिः=रोगः । भेषजसङ्ग्रहैः= औषधसेवनैः । भैषज्योपसेवया । [ वारयितुं शक्यः ] । च=किञ्च । विषं= गरलम् । विविधैः=नानाविधैः । मन्त्रप्रयोगैः = विषघ्नमन्त्रानुष्ठानैः । विषहरमन्त्रतन्त्राद्युपायैः । 'वारयितुं शक्य'मिति शेषः । [ इत्थं ] सर्वस्य=सर्वस्योपद्रवस्य । सर्वेषामप्युपद्रवाणाम् । शास्त्रविहितम् = आयुर्वेदमन्त्रशास्त्राद्युपदिष्टम् । औषधम् = निरासोपायः । अस्ति=विद्यते । [ किन्तु ] मूर्खस्य=मूढस्य । विवेकविकलस्य । औषधं=जाड्यदुराग्रहादिनिवर्त्तनोपायः । नास्ति=नैव विद्यते । शार्दूलविक्रीडितं वृत्तम् । 'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ।

[ भावार्थः ] अग्नि=सूर्यातप-दुष्टगज-गोगर्दभादिदुष्टदुर्दान्तपशु—रोग-विषादीनामौषधं शास्त्रेषु निर्दिष्टं, परन्तु मूर्खजाड्यविध्वंसकमौषधं तु क्वापि न श्रूयते।

[ कोशः ] 'हिरण्यरेता हुतभुग्दहनो हव्यवाहनः' इत्यमरः। 'प्रकाशो द्योत आतपः' इत्यमरः। 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः। 'क्ष्वेडस्तु गरलं विषम्' इत्यमरः।

[भाषाटीका] आग लगजाए तो उसे जल से बुझाया जा सकता है। सूर्य का ताप (घाम तावडा) यदि तेज हो तो छाता लगाकर उसे हटा सकते हैं। मदमस्त हाथी को भी अंकुश से वश में किया जा सकता है। सांड़ या गौ या गदहा आदि पशुओं को भी लाठी से रोका जा सकता है। रोग को औषधि से हटाया जा सकता है। सांप आदि के विष को भी मन्त्र तन्त्र आदि के प्रयोग से शान्त किया जा सकता है। इस प्रकार सभी उपद्रवों को दूर करने के उपाय शास्त्रों में बताये हैं, परन्तु मूर्खों की मूर्खता को दूर करने की कोई औषधि संसार में नहीं है॥ ११॥

साहित्यसङ्गीतकलाविहीनः
साक्षात्पशुः पुच्छविषाणहीनः।
तृणं न खादन्नपि जीवमान-
स्तद्भागधेयं परमं पशूनाम्॥ १२॥

[ अन्वयः ] [ यः पुमान् ] साहित्यसङ्गीतकलाविहीनः [ सः ] पुच्छविषाणहीनः साक्षात्पशुः [एव]। [ यत्तु सः ] तृणं न खादन्नपि जीवमानः [दृश्यते] तत् [ तु ] पशूनां परमं भागधेयम्।

[ विग्रहः ] साहित्यञ्च सङ्गीतञ्च साहित्यसङ्गीते, साहित्यसङ्गीते एव कले साहित्यसङ्गीतकले। साहित्यसङ्गीतकलाभ्यां विहीनः साहित्यसङ्गीतकलाविहीनः। यद्वा—साहित्यं च सङ्गीतं च कलाश्च साहित्यसङ्गीतकलाः, ताभिर्विहीनः। साहित्यसङ्गीतकलाविहीनः। पुच्छं च विषाणे च पुच्छविषाणं। प्राण्यङ्गत्वादेकवद्भावः। पुच्छविषाणेन हीनः पुच्छविषाणहीनः। [ विषाणत्वजातिविवक्षायान्तु—पुच्छं च विषाणं च पुच्छविषाणं, तेन हीन इति विग्रहः। जीवति तच्छीलः जीवमानः। भाग एव भागधेयम्।

[ राजलक्ष्मीः ] [ यः पुमान्— ] साहित्यसङ्गीतकलाविहीनः= काव्या-ऽलङ्कार=गानविद्या-कलादिवर्जितः । साहिती-नादविद्या-शिल्पकौशलविरहितः । [ सः ] पुच्छविषाणहीनः=लाङ्गूलशृङ्ग विकलः । वालधि-शृङ्गमात्ररहितः । साक्षात्=साक्षादुपलभ्यमानः । प्रत्यक्षं दृश्यमानः । पशुः=पशुरेव ।

ननु पशवस्तृणं खादन्ति, अयन्तु वराको न तथेति कथं साक्षात्पशुरतः स्वयमेवाह–तृणमिति । यत्तु स= जडः, तृणं=घासम् । न खादन्नपि=नैव भक्षयन्नपि । जीवमानः=जीवति । जीवितुं शक्नोति । जीवन् दृश्यते । तत्तु=तदिदन्तु । पशूनां=तृणभक्षणमात्राधाराणां गवादिपशूनाम् । परमं=प्रकृष्टम् । महत् । भागधेयं=भाग्यम् । 'इति मन्तव्य'मिति शेषः । साहित्यसङ्गीतकलाविकलः साक्षात्पशुरेव, परमस्य तृणभक्षणाऽभावस्तु पशूनां भाग्येन विधिनैव कल्पितोऽन्यथा तृणाऽलाभात्पशूनां जीवनमेव दुर्लभं स्यादिति विपश्चिता साहितीसङ्गीतकलाभिज्ञेन भवितव्यमित्यर्थः ।

[ कोशः ] 'पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः' इत्यमरः । 'अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः' इत्यमरः । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः ।

[ भावार्थः ] यो वै पुमाञ्शास्त्रविदपि साहित्यं सङ्गीतं कलालापाञ्छिल्पचातुरीं च न वेत्ति सोऽसौ साक्षात्पशुरेव शृङ्गपुच्छविहीनो लोके सञ्चरतीति मन्तव्यं । तृणभक्षणाऽभावस्तु पशूनां सौभाग्येन विधिनैवाऽस्य कल्पित इत्युपहासोऽयं शुष्कतार्किकमीमांसकवैयाकरणादीनाम् ।

[ भाषाटीका ] जो मनुष्य साहित्य ( काव्यों के लक्षण ग्रन्थ ) तथा सङ्गीत ( गान विद्या ) व कला कौशल को नहीं जानता है वह विना सींग पूँछ का निरा पशु ही है । वह जो घास-भूसा नहीं खाता है यह तो बेचारे पशुओं का ( बड़ा ) सौभाग्य ही समझिए । यदि वह मनुष्य—पशु घास भी खाने लगता तो बेचारे पशु घास विना ही मर जाते ॥ १२ ॥

येषां न विद्या, न तपो, न दानं,
ज्ञानं न, शीलं, न गुणो, न धर्मः ।
ते मर्त्यलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥ १३ ॥

[ अन्वयः ] येषां विद्या न, तपो न, दानं न, ज्ञानं न, शीलं (न), गुणो न, धर्मः न, ते मर्त्यलोके भुवि भारभूता मृगाः मनुष्यरूपेण चरन्ति ॥

[ विग्रहः ] मर्त्यानां लोकः मर्त्यलोकः, तस्मिन्–मर्त्यलोके । 'मृत्युलोके' इति पाठे मृत्योर्लोकः मृत्युलोक इति विग्रहः । भारं भूताः–प्राप्ताः भारभूताः । मनुष्याणां रूपं मनुष्यरूपं, तेन मनुष्यरूपेण ।

[ राजलक्ष्मीः ] येषां = पुंसाम् । विद्या = शास्त्रज्ञानं, कलाकौशलादिविज्ञानञ्च । न = नास्ति । न विद्यते । तपः = तपश्चरणम् । कायक्लेशकरं व्रतोपवासादिरूपं तपश्च । न=नास्ति । दानं=काले पात्रे च धनादिवितरणञ्च । न=नैवास्ति । ज्ञानं=विवेकः । हिताऽहितज्ञानम् । सदसद्विवेको वा । न=नास्ति । शीलं=सदाचारः । न=नैवास्ति । गुणः=दया दाक्षिण्यानृशंस्यादिरूपो गुणः । न–नैवास्ति । धर्मः=मन्वादिबोधितो वर्णाश्रमादिधर्मः । न=नास्ति । ते=ते पुरुषाः । मर्त्यलोके=मनुष्यलोके । भुवि=पृथिव्यां । पृथिव्या इत्यर्थः । भारभूताः=भाररूपाः । भारताङ्गताः । मनुष्यरूपेण=मनुजरूपेण । मृगाः=पशव एव । चरन्ति=प्रचरन्ति । इतस्ततो व्रजन्ति । उपजातिर्वृत्तम् । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इत्युक्तेः ।

[ भावार्थः ] विद्यादिविहीनानां दुःशीलानां भुवि जन्म निरर्थकमेव ।

[ कोशः ] 'तपः कृच्छ्रादिकर्म च' इत्यमरः । 'मृगः पशौ कुरङ्गे च' इत्यमरः ।

[ भाषाटीका ] जिन पुरुषों में विद्या, कलाकौशल, तप, दान, ज्ञान, शील, स्वभाव, दया आदि गुण, व धर्म नहीं हैं वे पुरुष इस पृथ्वी में भार (बोझा) स्वरूप

हैं। और वे पशु की तरह पृथ्वी पर इधर उधर व्यर्थ ही विचरण किया करते हैं १३

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह।
न मूर्खजनसम्पर्कः[१] सुरेन्द्रभवनेष्वपि ॥ १४ ॥

[ अन्वयः ] वनचरैः सह पर्वतदुर्गेषु भ्रान्तं वरं, ( किन्तु ] मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि न ( वरम् ) ॥

[ विग्रहः ] पर्वतानां दुर्गाणि—( पर्वताश्च दुगाणि चेति वा ) पर्वतदुर्गाणि, तेषु—पर्वतदुर्गेषु। वने चरन्तीति वनचराः, तैः वनचरैः। मूर्खजनानां सम्पर्कः मूर्खजनसम्पर्कः। सुराणामिन्द्रः सुरेन्द्रः, सुरेन्द्रस्य भवनानि सुरेन्द्रभवनानि, तेषु सुरेन्द्रभवनेषु।

[ राजलक्ष्मीः ] वनचरैः सह = वनेचरैः साकम्। वनवासिभिः सार्द्धम्। पर्वतदुर्गेषु=गिरिदुर्गभूमिषु। भ्रान्तं=भ्रमणम्। वरं=मनाक्प्रियम्। किञ्चिच्छ्रेष्ठमेव। ( किन्तु )—मूर्खजनसम्पर्कः=मूर्खजनसम्बन्धः। खललोकसंसर्गः। सुरेन्द्रभवनेष्वपि=देवराजमहेन्द्रमन्दिरेष्वपि। स्वर्गेऽपि। न=न वरम्। न मनाक्प्रियम्।

[ भावार्थ : ] वने वनचरैः सह वासो यथा कथञ्चिच्छोभनः, परं मूर्खैः सहवासस्तु स्वर्गेऽपि चेत्त्याज्य एव।

[ कोशः ] 'देवाद्वृते वरः, श्रेष्ठे त्रिषु, क्लीवं मनाक्प्रिये' इत्यमरः। 'साकं सत्रा समं सह' त्यमरः। 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः।

[ भाषाटीका ] वन में इधर उधर घूमने वाले जङ्गली—कोल,भील, किरात, मुसहर आदि के साथ पहाड़ों के बीहड़ स्थानों में इधर उधर मारे २ फिरना कहीं अच्छा है पर मूर्खों के साथ यदि इन्द्र की पुरी में ( इन्द्र के महलों में व स्वर्ग में ) भी रहना हो तो भी अभीष्ट नहीं है ॥ १४ ॥

शास्त्रोपस्कृतशब्दसुन्दरगिरः; शिष्यप्रदेयागमा,
विख्याताःकवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः।

१ संसर्गः' पा०।

**तज्जाड्यं वसुधाधिपस्य, कवयो ह्यर्थं विनापीश्वराः,**
**कुत्स्याःस्युःकुपरीक्षका हि मणयो यैरर्घतः पातिताः ॥ १५ ॥**

[अन्वयः] शास्त्रोपस्कृतशब्दसुन्दरगिरः, शिष्यप्रदेयाऽऽगमाः, विख्याताः, कवयः यस्य प्रभोर्विषये निर्धनाः वसन्ति, तत् वसुधाधिपस्य जाड्यम् (अस्ति)। कवयस्तु अर्थं विनापि ईश्वराः (एव भवन्ति)। हि (ते) कुपरीक्षकाः कुत्स्याः स्युः यैर्मणयोऽर्घतः पातिताः ॥ १५ ॥

[विग्रहः] शास्त्रेषु (शास्त्रैर्वा) उपस्कृतास्तैःशब्दैःसुन्दरा गिरो येषान्ते शास्त्रोपस्कृतशब्दसुन्दरगिरः। शिष्येभ्यः प्रदेया आगमा येषान्ते शिष्यप्रदेयाऽऽगमाः। धनान्निर्गताः निर्धनाः। वसुधाया अधिपस्तस्य--वसुधाधिपस्य। जडस्य भावो जाड्यम्। कुत्सिताः परीक्षकाः कुपरीक्षकाः ॥ १५ ॥

[राजलक्ष्मीः] शास्त्रोपस्कृतशब्दसुन्दरगिरः=शब्दशास्त्रपरिस्कृतशुद्धशब्दविन्यासमधुरसुन्दरगिरः। संस्कृतसरससालङ्कारसारवचनाः। शिष्यप्रदेयागमाः=अन्तेवासिसार्थप्रदेयकाव्यालङ्कारादिविद्यारहस्याः। छात्रप्रदेयसम्प्रदायविशुद्धसाहित्यादिविद्याः। विख्याताः=सुप्रसिद्धाः। कवयः=महाकवयः। विद्वांसश्च। यस्य प्रभोः=यस्येश्वरस्य। यस्य राज्ञः। विषये=देशे। राष्ट्रे। निर्धनाः=निःस्वाः सन्तः। दरिद्राः सन्तः वसन्ति=निवसन्ति। कथञ्चित्कालं नयन्ति। दुःखेन तिष्ठन्ति। तत्=तदेतत्। वसुधाधिपस्य=तस्य पृथ्वीपतेः। राज्ञः। जाड्यं=मौर्ख्यम् अविवेकः। अस्तीति शेषः। कवयस्तु=महाकवयस्तु। पण्डितास्तु। अर्थं विनाऽपि=धनं विनाऽपि। द्रविणसम्पत्तिमन्तरेणाऽपि। ईश्वराः=धनिनः। प्रभवः। मान्याश्च। भवन्तीति शेषः। हि=निश्चयेन। कुपरीक्षकाः=ते परीक्षकाऽधमाः। जडमतयो रत्नपरीक्षका एव। कुत्स्याः=कुत्सनीयाः। निन्द्याः। स्युः=भवेयुः। यैः=कुपरीक्षकैः। मणयः

=महार्घरत्नानि। अर्घतः=समुचितमूल्यतः। उचितसत्कारतः। पातिताः =विनिपातिताः। च्याविताः। न्यूनमूल्यतया प्रख्यापिताः।

[कोशः] 'गीर्वाग्वाणी सरस्वती'त्यमरः। सङ्ख्यावान् पण्डितः कविः'इत्यमरः 'अर्थरैविभवा अपि' इत्यमरः। 'रत्नं मणिर्द्वयोरश्मजातौ'इत्यमरः।

[भाषा] जिनकी व्याकरण आदि से शुद्ध, अलङ्कार युक्त, सरस वाणी है, जो शिष्यों को नाना शास्त्रों का सम्प्रदाय विशुद्धउपदेश देते हैं, ऐसे सुप्रसिद्ध विद्वान् जिस राजा के राज्य में निर्धन होकर रहते हैं, यह उस राजा की ही जडता (अविवेक) है। (न कि उन कवियों की इसमें कोई त्रुटि है)। क्यों कि विद्वान् कवि तो धन के विना भी जगत् में मान्य हैं। पर वे मूर्ख रत्नपरीक्षक (जोहरी-राजा) ही निन्दा के पात्र हैं जिन्होंने उत्तम रत्न को मूल्य से गिराया हो। (अर्थात् जिन्होंने उस मणि का ठीक २ मूल्य नहीं बताया व नहीं समझा वे ही दोषी हैं न कि रत्न में कुछ आता है)॥ १५॥

**हर्तुर्याति न गोचरं, किमपि शं पुष्णाति यत्सर्वदा-**
**प्यर्थिभ्यःप्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम्।**
**कल्पान्तेष्वपि न प्रयाति निधनं, विद्याख्यमन्तर्धनं**
**येषां, तान्प्रति मानमुज्झत नृपाः! कस्तैः सह स्पर्द्धते॥**

[अन्वयः] नृपाः! यत् हर्त्तु गोंचरं न याति, सर्वदा किमपि शं पुष्णाति, अर्थिभ्यः अनिशं प्रतिपाद्यमानम् अपि परां वृद्धिं प्राप्नोति, कल्पान्तेष्वपि निधनं न प्रयाति, [ईदृशं] येषां विद्याख्यमन्तर्धनं तान्प्रति मानमुज्झत। हि तैः सह कः स्पर्धते?॥ १६॥

[विग्रहः] कल्पनामन्ताः--कल्पान्ताः, तेषु--कल्पान्तेषु। विद्या आख्या यस्य तत् विद्याख्यम्।

[राजलक्ष्मीः] नृपाः=हे राजानः। यत्=यद्धनम्। हर्त्तुः=चौरस्य। जिहीर्षोर्वा। गोचरं=लोचनविषयं। न याति=न गच्छति। सर्वदा= सर्वस्मिन् काले। किमपि=अनिर्वचनीयम्। शं=कल्याणम्। शुभम्। निःश्रेयससुखम्। पुष्णाति=वर्द्धयति। किंच अर्थिभ्यः=

याचकेभ्यः। पक्षे—विद्यार्थिभ्यश्च। अनिशं=सततम्। प्रतिपाद्यमानमपि=दीयमानमपि। परां=विपुलां। सुमहतीम्। वृद्धिं=समृद्धिम्। प्राप्नोति=समश्नुते। लभते। कल्पान्तेष्वपि=प्रलयेष्वपि। खण्डप्रलयमहाप्रलयादिष्वपि। निधनं=नाशम्। न प्रयाति=न गच्छति। [ ईदृशं ] येषां=विदुषाम्। विद्याख्यं=विद्यानामकम्। अन्तर्धनं=सुगुप्तं धनम्। [ अस्ति ]। तान् प्रति=तान् विदुषः प्रति। तान् पण्डितान् प्रति। मानं=गर्वम्। अभिमानम्। उज्झत=यूयं परित्यजत। यतः—तैः सह=पण्डितैः साकम्। कः स्पर्द्धते=कः पुमान् स्पर्द्धां करोति?। न कोऽपि करोतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

[ भावार्थः विद्याधनं सदाऽविनाशि वर्द्धिष्णु कल्याणदं येषामस्ति ते प्राज्ञाः सर्वेषां मान्याः। अतो हे राजानस्तान् सादरं पूजयत मा गर्वं कुरुत।

[ कोशः ] 'संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः। 'साकं सत्रा समं सहे'त्यमरः॥ १६॥

[ भाषा ] हे राजालोगों! जो धन चोर को दिखाई भी नहीं देता, जो अनिर्वचनीय सुख व आनन्द को सदा देता है, जो रातदिन बाँटते रहने पर भी बढ़ता ही है, कम नहीं होता, जो प्रलय में भी नष्ट नहीं होता है ऐसा विद्यारूपी गुप्तधन जिन विद्वानों के पास है उन विद्वानों के आगे अभिमान व घमण्ड करना छोड दो। क्योंकि ऐसे पूज्य विद्वानों के साथ स्पर्धा ( डाह ) कौन कर सकता है?। कोई नहीं॥ १६॥

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि।
अभिनवमदलेखाश्यामगण्डस्थलानां[1]
न भवति बिसतन्तुर्वारणं वारणानाम्॥ १७॥

---

१ 'लेखाऽऽश्याने'ति पाठे आश्यानानि=कृशानीत्यर्थः। 'मदमिलितमिलिन्दश्यामगण्डस्थलाना'मिति पाठे मिलिन्दो भ्रमरः।

[ अन्वयः ] ( हे राजन् ! ) अधिगतपरमार्थान् पण्डितान् माऽवमंस्थाः। ( यतः ) तृणमिव लघु लक्ष्मीः तान् नैव संरुणद्धि । बिसतन्तुः अभिनवमदलेखा-श्यामगण्डस्थलानां वारणानां वारणं न भवति ॥

[ विग्रहः ] परमश्चासावर्थश्च—परमार्थः । अधिगतः परमार्थो यैस्ते अधिग-तपरमार्थाः, तान्—अधिगतपरमार्थान् । अभिनवो मदोऽभिनवमदः, तस्य लेखा, तया श्यामानि गण्डस्थलानि येषान्ते—अभिनवमदलेखाश्यामगण्डस्थलाः, तान्— । बिसस्य तन्तुः बिसतन्तुः । वार्यतेऽनेन तत् वारणम् ।

[ राजलक्ष्मीः ] ( हे राजन् ! ) अधिगतपरमार्थान् = समधिगत-तत्त्वान् । पण्डितान्=विदुषः । माऽवमंस्थाः=मा तिरस्कार्षीः । लक्ष्मीः= श्रीः । सम्पत्तिः । 'लघुलक्ष्मी'रित्येकं समस्तं पदं वा बोध्यम् । तान् = पण्डितान् । नैव संरुणद्धि=कदाचिदपि न निरुणद्धि । निरोद्धुं न श-क्नोति। यतः—बिसतन्तुः = मृणालसूत्रम् । अभिनवमदलेखाश्यामग-ण्डस्थलानां=नवीनमदजलधाराश्यामलकपोलभित्तीनाम् । [ 'मदमि-लिते'त्यादिपाठे दानजलनिविष्टभ्रमरश्यामकपोलभित्तीनामित्यर्थो बोध्यः ]। वारणानां = गजेन्द्राणाम् । वारणं=निरोधकः । न भवति= नैव भवति ।

[ भावार्थः ] तत्त्वविदः पण्डिताल्लँक्ष्मीर्निरोद्धुं न शक्नोति ।

[ कोशः ] 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । 'मदो दानम्' इत्यमरः । 'मत-ङ्गजो गजो नागः कुञ्जरो वारणः करी' त्यमरः । 'मृणालं बिस' मित्यमरः ।

[ भाषाटीका ] हे राजन्! जिन्होंने परमार्थतत्त्व ( ब्रह्म ) का साक्षात्का' किया है ऐसे विद्वानों का तिरस्कार मत कर । उन विद्वानों को तृण की भांति तुच्छ लक्ष्मी बांध नहीं सकती । क्या मद से मलिन गण्डस्थल वाले मत्त हाथियों को मृणाल ( कमलनाल ) का तन्तु बांध सकता है ? । कदापि नहीं ॥ १७ ॥

अम्भोजिनीवनविहारविलासमेव[1]
हंसस्य [2]हन्ति नितरां[3]कुपितो विधाता।
न त्वस्य दुग्धजल भेद विधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १८ ॥

(अन्वयः) कुपितो विधाता हंसस्य अम्भोजिनी वनविहार विलासमेव नितरां हन्ति। तु असौ अस्य दुग्धजलभेदविधौ प्रसिद्धां वैदग्ध्यकीर्तिम् अपहर्तुं न समर्थः ॥

[ विग्रहः ) विहरणं विहारः। अम्भोजिनीनां वनम्–अम्भोजिनीवनम्, अम्भोजिनीवने विहारः–अम्भोजिनीवनविहारः तत्र यो विलासः, तम्–अम्भोजिनीवनविहारविलासम्। दुग्धं च जलं च दुग्धजलं, ( 'जातिरप्राणिना' मित्येकवद्भावः ) तस्य भेद–स्तस्य विधिः, तस्मिन्-दुग्धजलभेदविधौ। विदग्धस्य भावो वैदग्ध्यं, तस्य कीर्तिः, वैदग्ध्यकीर्त्तिः। ताम् वैदग्ध्यकीर्त्तिम्।

( राजलक्ष्मीः ) कुपितः=क्रुद्धोऽपि। विधाता=विधिः। ब्रह्मा। हंसस्य=मानसौकसः। राजहंसस्य। अम्भोजिनीवनविहारविलासमेव= कमलिनीविपिनविहरणसौख्यमेव। कमलिनीसमूहक्रीडासौभाग्यमेव। नितराम्=अत्यन्तम्। अन्ततः। सर्वथा। हन्ति=नाशयति। तु = किन्तु। असौ = विधिः। अस्य = हंसस्य। दुग्धजलभेदविधौ = क्षीरनीरविवेकविधाने। दुग्धजलयोर्मिलतयोः पृथक्करणे। प्रसिद्धां=त्रैलोक्यविख्याताम्। वैदग्ध्यकीर्त्तिम्=चातुर्यकीर्त्तिम्। कौशलकीर्त्तिपताकाम्। अपहर्त्तुं=विनाशयितुम्। अपनेतुम्। न समर्थः = नैव समर्थः नैव शक्तः। वसन्ततिलका वृत्तम्।

---

१ विहारः = परिभ्रमणं क्रीडनं वा। विलासः=आनन्दः। ( मौज )। 'वननिवासविलास'। 'वनविलासनमेव हन्त' पा०। २ 'हन्तु'–पा०।
३ ( नितरां=ज्यादा से ज्यादा )।

[ भावार्थः ] विधाता कुपितोऽपि हंसस्य कमलिनीविहारसौख्यं तुषारपातादिनाऽपहर्त्तुं शक्नोति, परं हंसस्य सहजां नीरक्षीरविवेकचातुरीं हर्त्तुं न समर्थः। एवं राजापि स्वदत्तां परदत्तां वा विदुषां धनसम्पत्तिं हर्त्तुं शक्नोति, परं तेषां सहजं वैदुष्यं हर्त्तुं नैव शक्नोति।

[ कोशः ] 'विपिनं काननं वनम्' इत्यमरः। 'विधाता विश्वसृड्विधिः' इत्यमरः। 'यशः कीर्तिः समज्ञा च' त्यमरः।

[भाषाटीका] हंस पर यदि ब्रह्मा जी अप्रसन्न भी हों तो बर्फ गिराकर कमलिनी (कमलों की लता) को नष्ट कर हंसकी कमलवन संचरण क्रीडामें वे विघ्न डाल सकते हैं। परन्तु मिले हुए दूध और जलको अलग करनेमें जगत्प्रसिद्ध जो हंस की कीर्ति है उसे तो वे नहीं ले सकते। इसी प्रकार राजा भी क्रुद्ध हों पण्डित का अपने राजदबारमें आना बन्द कर सकता है, धन भी छीन सकता है परन्तु उनका पाण्डित्य व कवित्व तो नहीं छीन सकता है ॥ १८ ॥

[1]केयूराणि न भूषयन्ति पुरुषं, हारा न चन्द्रोज्ज्वला,
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्द्धजाः।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते,
क्षीयन्ते खलु भूषणानि सततं, वाग्भूषणंभूषणम् ॥

( अन्वयः ) केयूराणि पुरुषं न विभूषयन्ति, चन्द्रोज्ज्वला हाराः न ( विभूषयन्ति ), स्नानं न, विलेपनं न, कुसुमं न, अलङ्कृता मूर्द्धजाः न, ( किन्तु ) एका वाणी पुरुषं समलङ्करोति या संस्कृता धार्यते। भूषणानि खलु क्षीयन्ते, वाग्भूषणं सततं भूषणम्।

[ विग्रहः ] चन्द्रवदुज्ज्वलाः चन्द्रोज्ज्वलाः। वागेव भूषणं वाग्भूषणम्। भूष्यतेऽनेन तत् भूषणम्।

[ राजलक्ष्मीः ] केयूराणि=अङ्गदानि। पुरुषं=नरं। न भूषयन्ति=नालङ्कुर्वन्ति। चन्द्रोज्ज्वलाः=इन्दुधवलाः। हाराः=

१ 'केयूरा न विभूषयन्ति'।

वज्रमुक्तादिकण्ठभूषणानि । न = नैव । भूषयन्ति । स्नानम्=अवगाहनम् । न=नैव भूषयति । विलेपनम्=अङ्गरागः । न=नैव भूषयति । कुसुमं=पुष्पम् । पुष्पमाला । न=नैव भूषयति । अलंकृताः=प्रसाधिताः । भूषिताः । परिष्कृताः । मूर्द्धजाः=केशाः । न=नैव भूषयन्ति । ( किन्तु ) एका=केवला । वाणी-वाक् । पुरुषं=नरम् । समलङ्करोति=विभूषयति । या=या वाणी । संस्कृता=व्याकरणसाहित्यादिलक्षणपरिष्कृता । धार्यते=मुखे स्थाप्यते । यत भूषणानि=रत्नसुवर्णाद्यलङ्काराणि । खलु=निश्चयेन । क्षीयन्ते=नश्यन्ति । वाग्भूषणं=संस्कृतवाणीरूपं भूषणमेव तु । सततं=निरन्तरम् । सदैव । भूषणं=वास्तवं भूषणं । 'भवती'ति शेषः ।

[ भावार्थः ] अन्यानि भूषणानि शीघ्रं नश्यन्ति, संस्कृता वागेवैका पुंसो वास्तवं भूषणं भवति ।

[ कोशः ] 'केयूरमङ्गदं तुल्ये' इत्यमरः । 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्' इत्यमरः ।

[ भाषाटीका ] मनुष्य को—न तो हाथ के बाजूबन्द आदि गहने ही सदा शोभित करते हैं, न चन्द्रमा की तरह चमकने वाले मोतियों के हार, न स्नान, न अङ्गराग ( कस्तूरी आदि का लेप ), न फूलों की माला, न सँवारे हुए बाल ही शोभित करते हैं । किन्तु एक संस्कृत ( व्याकरण आदि से शुद्ध ) वाणी ही मनुष्य को सदा विभूषित करती है । क्योंकि और भूषण तो नष्ट भी हो जाते हैं, पर वाणी रूप भूषण तो सदा पास में ही रहता है । अतः अपनी वाणी को व्याकरण आदि से शुद्ध करना चाहिये ॥ १९ ॥

**विद्या नाम नरस्य रूपमधिकं [1]प्रच्छन्नगुप्तं धनं**
**विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।**

---

१ 'प्रच्छन्नमन्तर्धनं' पा० ।

**विद्या बन्धुजनो विदेशगमने, विद्या [1]परं दैवतं,**
**विद्या राजसु [2]पूज्यते, [3]न हि धनं, विद्याविहीनः पशुः ॥ २० ॥**

[ अन्वयः ] विद्या नाम नरस्य अधिकं रूपम्, प्रच्छन्नगुप्तं धनं, विद्या भोग-करी, यशःसुखकरी, विद्या गुरूणां गुरुः, विद्या विदेशगमने बन्धुजनः, विद्या परं दैवतं, विद्या राजसु पूज्यते, धनं नहि, विद्या-विहीनः पशुः ( भवति ) ॥२०॥

[ विग्रहः ] प्रच्छन्नश्च तद्गुप्तश्च—प्रच्छन्नगुप्तम्। प्रच्छन्नं यथा स्यात्तथा गुप्तमिति वा। भोगं करोति तद्धेतुः भोगकरी। यशश्च सुखं च यशःसुखे-तत् करोतीति यशःसुखकरी। बन्धुश्चासौ जनश्च बन्धुजनः। विदेशे गमनं विदेशगमनम्। तस्मिन्। विद्यतेऽनया विद्या। विद्यया विहीनः विद्याविहीनः।

[ राजलक्ष्मीः ] विद्या नाम=विद्या खलु। नामेति प्रसिद्धौ। नरस्य=पुंसः। अधिकं=विशिष्टम्। श्रेष्ठम्। रूपं=स्वरूपम्। सौन्दर्यम्। [ किञ्च ] प्रच्छन्नगुप्तं=नितरां गूढम्। चौरराजाद्यहार्यत्वादत्यन्तं सुरक्षितम्। धनं=द्रव्यम्। अस्तीति शेषः। विद्या-भोगकरी=राजोचितोपभोगकरी। यशःसुखकरी=कीर्त्तिसुखप्रदा च। विद्या-गुरूणां=मान्यानां। श्रेष्ठानामपि। गुरुः=श्रेष्ठा। विद्या—विदेशगमने=परदेशगमने। प्रवासे। बन्धुजनः=बन्धुवर्गः। विद्या-परं=परमं। देवतैव दैवतं=देवता। विद्या-राजसु=नृपतिषु। पूज्यते=आद्रियते। धनं न हि=द्रव्यं नैव। ( अतः ) विद्याविहीनः=विद्याविरहितः। पशुः=पशुरेव भवति।

[ भाषाटीका ] विद्या ही मनुष्य का श्रेष्ठ रूप है, विद्या ही गुप्त सुरक्षित धन है, विद्या ही—भोग कीर्त्ति व सुख को देनेवाली है अतः विद्या ही सब में श्रेष्ठ है। परदेश में विद्या ही सहायक बन्धु है, विद्या ही परम देवता है। राजाओं के दर्बार में भी विद्या की पूजा होती है, धन की नहीं, अतः जो विद्यासे रहित है वह पशु ही है ॥ २० ॥

१ 'परा देवता'। २ 'पूजिता'। ३ 'न तु' पा०।

**क्षान्तिश्चेत्कवचेन किं, किमरिभिः क्रोधोऽस्तिचेद्देहिनां,**
**ज्ञातिश्चेदनलेन किं, यदि सुहृद्दिव्यौषधैः किं फलम् ।**
**किं सर्पैर्यदि दुर्जनाः, किमु धनैर्विद्याऽनवद्या यदि,**
**व्रीडा चेत्किमु भूषणैः, सुकविता यद्यस्ति राज्येन किम् ॥**

[ अन्वयः ] देहिनां क्षान्तिश्चेत् कवचेन किम् । क्रोधोऽस्ति चेत् अरिभिः किम् । ज्ञातिश्चेत् अनलेन किम् । यदि सुहृत् ( अस्ति तर्हि ) दिव्यौषधैः किं फलं, यदि दुर्जनाः [ सन्ति तर्हि ] सर्पैः किम् । यदि अनवद्या विद्या तर्हि धनैः किम् । व्रीडा चेत् भूषणैः किम् । यदि सुकविता अस्ति (तदा) राज्येन किम् ॥ २१ ॥

[ विग्रहः ] न अवद्या–अनवद्या । शोभना कविता सुकविता । दिव्यानि च तान्यौषधानि च दिव्यौषधानि, तैः=दिव्यौषधैः ॥ २१ ॥

[ राजलक्ष्मीः ] देहिनां=प्राणिनाम् । क्षान्तिः = क्षमा । चेत्=यदि । अस्ति तदा । कवचेन=वर्मणा । किं = किंफलम् । किं प्रयोजनम् । न किमपीत्यर्थः । क्रोधोऽस्ति चेत्=यदि कोपोऽस्ति तर्हि । अरिभिः=शत्रुभिः । किम्=किं प्रयोजनम् । तेनैवाऽनर्थसम्भवात् । ज्ञातिः=बान्धववर्गः । दायादसमूहः । चेत्=यद्यस्ति तर्हि । अनलेन=अग्निना । किं=किं प्रयोजनम् । तेनव सर्वानर्थसन्तापसम्भवात् । यदि=चेत् । सुहृत्=मित्रमस्ति । तर्हि = दिव्यौषधैः = अमोघवीर्यैः सिद्धभेषजैः । किं फलम् = किं प्रयोजनम् ? । मित्रेणैव सर्वाऽनर्थनिर्मूलनात् । यदि=चेत् । दुर्जनाः दुष्टा जनाः । खलाः । सन्तीति शेषः । तर्हि–सर्पैः=भुजङ्गमैः । अहिभिः । किं=किं प्रयोजनम् । खलानामेव प्राणहारित्वात् । यदि=चेत् । अनवद्या=निर्दोषा । विद्या=ज्ञानसाधनम् । शास्त्राणि । कलाश्च । अस्तीति शेषः । तर्हिधनैः=द्रविणैः । द्रव्यैः । किमु=किं प्रयोजनम् ? । विद्ययैव धनकार्यस्य सुखोपभोगादेः सिद्धत्वात् । व्रीडा=लज्जा । चेत्=यदि । अस्तीति शेषः । भूषणैः=आभूषणैः । अलङ्कारैः । किमु=किं नु फलम् ? ।

तस्या एव शोभाधायकत्वात्। यदि–चेत् । सुकविता=सुकवित्वम् । सहृदयाऽऽह्लाददायिनो सरसा सालङ्कृतिश्च कविता । अस्तीति शेषः। तर्हि-राज्येन=राष्ट्रेण । राज्यलक्ष्म्या । किं=किं प्रयोजनम् ? । नैव किञ्चित्प्रयोजनम् । तत एव सकललोकानां वशीकरणस्य सम्भवात् ।

[ कोशः ] 'कोपक्रोधाऽमर्षरोषप्रतिघाः' इत्यमरः । 'अथ मित्रं सखा सुहृ' दित्यमरः । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः ।

[ भाषाटीका ] यदि पुरुष क्षमाशील है तो कवच की क्या आवश्यकता है, पुरुष में यदि क्रोध है तो शत्रु की क्या आवश्यकता है। ( अर्थात् क्रोध ही सबसे बड़ा शत्रु है )। यदि ज्ञाति हैं तो अग्नि की क्या आवश्यकता है। ( अर्थात् जातिके लोग ही अग्नि की तरह जलाने वाले होते हैं )। यदि प्रिय मित्र है तो दिव्य औषधियों से क्या प्रयोजन है ?। यदि दुर्जनों से सङ्गति है तो सर्पों की क्या जरूरत है ?। यदि निर्दुष्ट विद्या है तो धन की क्या आवश्यकता है। लज्जा है तो अन्य भूषणों से क्या काम है ?। यदि सुन्दर कविता है तो राज्य का क्या काम है ॥२१॥

दाक्षिण्यं स्वजने, दया परिजने,[1] शाठ्यं सदा दुर्जने,
प्रीतिः साधुजने, नयो नृपजने, विद्वज्जने चार्जवम् ।
शौर्यं शत्रुजने, क्षमा गुरुजने, नारीजने धूर्तता,[2]
ये चैवं पुरुषाःकालसु कुशलास्तेष्वेव लोकस्थितिः ॥ २२ ॥

[ अन्वयः ] स्वजने दाक्षिण्यं, परिजने दया, दुर्जने सदा शाठ्यं, साधुजने प्रीतिः, नृपजने नयः, विद्वज्जने चाऽऽर्जवं, शत्रुजने शौर्यं, गुरुजने क्षमा, नारीजने धूर्तता । ये च पुरुषाः एवं कलासु कुशलास्तष्वेव लोकस्थितिः [ अस्ति ] ॥

[ विग्रहः ] दक्षिणस्य भावः दाक्षिण्यम् । स्वस्य जनः-स्वजनः, तस्मिन् स्वजने । परश्चासौ जनश्च परजनः, तस्मिन्-परजने । शठस्य भावः—

१ 'परजने' इतिपाठे—स्वातिरिक्तलोके । उदासीनलोके इत्यर्थः । २ 'धृष्टता' ।

शाठ्यम् । नृपश्चासौ जनश्च तस्मिन् । विद्वांश्चासौ जनश्च विद्वज्जनः, तस्मिन् । ऋजोर्भावः-आर्जवम् । शूरस्य भावः-शौर्यम् । शत्रुश्चासौ जनश्च-शत्रुजनः, तस्मिन् । गुरुश्चासौ जनश्च गुरुजनः, तस्मिन् । नारी चासौ जनश्च नारीजनः, तस्मिन् नारीजने । धूर्त्तस्य भावः-धूर्त्तता । लोकस्य स्थितिः-लोकस्थितिः ।

[ राजलक्ष्मीः ] स्वजने=आत्मजने । स्वबन्धुबान्धववर्गे । दाक्षिण्यम्=औदार्यम् । आनुकूल्यम् । चित्तानुवर्त्तनम् । परिजने=भृत्यवर्गे । स्वपरिचारकवर्गे च । दया=कृपा । अनुकम्पा । दुर्जने=खलजने । सदा=सर्वदा । शाठ्यम्=शठता । क्रूरता । कुटिलता । साधुजने=सज्जने । प्रीतिः=स्नेहः । नृपजने=राजवर्गे । नयः=नीतिः । नीतिनैपुण्यम् । विद्वज्जने=पण्डितवर्गे । आर्जवं=सरलता । साधुता । शत्रुजने=रिपुजने । शौर्यं=पराक्रमः । गुरुजने=पूज्ये । पितृभ्रातृवर्गे । क्षमा=क्षान्तिः । सहिष्णुता । नारीजने=स्त्रीलोके । कान्तालोके । धूर्त्तता=चतुरता । वञ्चकता । 'धृष्टते' ति पाठेऽपि प्रगल्भतेत्यर्थः । ये च=ये वै । पुरुषाः=पुमांसः । एवम्=इत्थम् । कलासु=पूर्वोक्तासु लोकरञ्जनविद्यासु । कुशलाः=निपुणाः । पटवः सन्ति । तेष्वेव=तेष्वेव पुरुषेषु । लोकस्थितिः=लोकमर्यादा । तिष्ठतीति शेषः । त एव लोकसंस्थितिहेतवो भवन्तीति भावः ।

[ कोशः ] 'कृपा दयाऽनुकम्पा स्या' दित्यमरः । 'दक्षिणे सरलोदारौ' इत्यमरः ।

[ भाषाटीका ] अपने कुटुम्बियों पर उदारता, परिजनों पर दया, दुर्जनों से शठता, सज्जनों से प्रीति, राजसभा में नीति, विद्वानों से नम्रता, शत्रुजन से शूरता, बड़े लोगों से क्षमा, और स्त्रियों से धूर्तता-इस प्रकार व्यवहार करने की कला में जो निपुण हैं उन्हीं पर यह संसार टिका हुआ ( स्थित ) है ॥ २२ ॥

जाड्यं धियो हरति, सिञ्चति वाचि सत्यं,
मानोन्नतिं दिशति, पापमपाकरोति ।

**चेतः प्रसादयति, दिक्षु तनोति कीर्तिं,**
**सत्सङ्गतिः कथय किं न करोति पुंसाम् ? ॥ २३ ॥**

[ अन्वयः ] धियो जाड्यं हरति, वाचि सत्यं सिञ्चति, मानोन्नतिं दिशति पापमपाकरोति, चेतः प्रसादयति, दिक्षु कीर्तिं तनोति । सत्सङ्गतिः पुंसां किं न करोति ? कथय ॥

[ विग्रहः ] जडस्य भावः–जाड्यम् । तत् । मानस्य उन्नतिः–मानोन्नतिः, तां–मानोन्नतिम् । सतां सङ्गतिः–सत्सङ्गतिः ।

[ राजलक्ष्मीः ] धियः=मतेः । बुद्धेः । जाड्यं=जडतां । मन्दताम् । अपाटवम् । हरति=नाशयति । वाचि=वाण्याम् । सत्यं=सत्यताम् । सिञ्चति=ददाति । विनिवेशयति । मानोन्नतिम्=आदरोन्नतिम् । मानवृद्धिम् । दिशति=ददाति । पापं=दुष्कृतम् । किल्बिषम् । दुरितम् । अपाकरोति=अपसारयति । दूरीकरोति । चेतः=चित्तम् । प्रसादयति=निर्मलतां नयति । प्रसन्नतां प्रापयति । दिक्षु=अशासु च । कीर्त्तिं=यशः । तनोति=विस्तारयति । वर्द्धयति । सत्सङ्गतिः = सज्जनसङ्गतिः । सज्जनसमागमः । पुंसां=पुरुषाणाम् । किं=किङ्कार्यम् । न करोति=न विधत्ते । कथय=ब्रूहि । सर्वमेव कार्यं निष्पादयति ।

[ भावार्थः ] सज्जनसमागमेन सर्वमभीष्टं प्राप्यते ।

[ कोशः ] 'पापं किल्बिषकल्मषम्' इत्यमरः । 'चित्तंतु चेतो हृदयम्' इत्यमरः । 'यशः कीर्त्तिः समज्ञा च' इत्यमरः ।

[ भाषाटीका ] सज्जनों की सङ्गति, बुद्धि की जड़ता को नाश करती है, वाणीको सत्यरस से सींचती है, मानको उन्नत करती है, पापको दूर करती है, चित्त को प्रसन्न करती है और देश देशान्तर में कीर्तिको फैलाती है । बताइए–सत्सङ्गति मनुष्योंके लिये क्या नहीं करती है ? अर्थात् सब कुछ करती है ॥२३॥

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।**
**नास्ति येषां यशःकाये जरामरणजं भयम् ॥ २४ ॥**

[ अन्वयः ] सुकृतिनो रससिद्धाः ते कवीश्वराः जयन्ति येषां यशःकाये जरामरणजं भयं नास्ति ॥

[ विग्रहः ] रसैः रसेन च सिद्धाः रससिद्धाः । कवीनामीश्वराः—कवीश्वराः । सुकृतमस्त्येषां सुकृतिनः । यश एव कायः यशःकायः, तस्मिन् यशःकाये । जरा च मरणं च जरामरणे । जरामरणाभ्यां जायते इति जरामरणजम् ।

[ राजलक्ष्मीः ] सुकृतिनः=धन्याः । पुण्यशीलाः । महाकाव्यादिप्रणेतारश्च । रससिद्धाः=पारदसेवनलब्धसिद्धयः । सिद्धशृङ्गारवीरकरुणादिनवरसाश्च । वश्यवाचः । ते=प्रसिद्धाः । कवीश्वराः=वश्यवचसो महाकवयः । महात्मानश्च । जयन्ति=विजयन्ते । सर्वोत्कर्षेण वर्त्तन्ते । येषां=कवीश्वराणाम् । यशःकाये=यशःशरीरे । कीर्तिरूपे वपुषि । जरामरणजं=जरामृत्युजम् । वार्द्धक्यमृत्युजं । भयं=भीतिः । नास्ति=न वर्त्तते ।

[ भावार्थः ] यथा पारदसेवनसिद्धानां योगिनां शरीरे जरामृत्युजं भयं न भवति तथा शृङ्गारादिरससिद्धानां महाकवीनां यशः शरीरं कल्पान्तस्थायि ।

[ कोशः ] 'सुकृती पुण्यवान् धन्यः' इत्यमरः । 'भीतिर्भीः साध्वसं भयम्' इत्यमरः ।

[ भाषाटीका ] पुण्यात्मा व रससिद्ध [ पारद के सेवन से सिद्धपद को प्राप्त हुए । कवि पक्ष में—शृङ्गारादि रसों में सुसिद्ध ] वे जगत्प्रसिद्ध कवीश्वर ( महाकवि ) सबसे बड़े हैं जिनके यशरूपी शरीर को जरा और मरण से भय नहीं है । [ पारद के सेवन से सिद्ध लोग हजारों वर्ष जीते हैं और उन्हें बुढ़ापा व मृत्यु का भय नहीं रहता । ] ॥ २४ ॥

**सूनुःसच्चरितः, सती प्रियतमा, स्वामी प्रसादोन्मुखः,**
**स्निग्धं मित्रमवञ्चकः परिजनो, निष्क्लेशलेशं मनः ।**

आकारो रुचिरः, स्थिरश्च विभवो, विद्यावदातं मुखं,
तुष्टे [1]विष्टपहारिणीष्टदहरौ[2] सम्प्राप्यते देहिना ॥ २५ ॥

[ अन्वयः ] विष्टपहारिणि इष्टदहरौ तुष्टे देहिना-सच्चरितः सूनुः, सती प्रियतमा, प्रसादोन्मुखः स्वामी, स्निग्धं मित्रमवञ्चकः परिजनः, निष्क्लेशलेशं मनः, रुचिरः, आकारः स्थिरश्च विभवः, विद्यावदातं मुखम्-प्राप्यते ॥

[ विग्रहः ] सत्—चरितं यस्यासौ सच्चरितः । अतिशयेन प्रिया प्रियतमा । प्रसादे प्रसादाय वा उन्मुखः--प्रसादोन्मुखः । न वञ्चकः-अवञ्चकः । क्लेशस्य लेशः क्लेशलेशः, क्लेशलेशान्निष्क्रान्तं-निष्क्लेशलेशम् । विद्ययाऽवदातं विद्यावदातम् । विष्टपं हरति तच्छीलः विष्टपहारी, तस्मिन् विष्टपहारिणि । इष्टं ददातीति इष्टदः, स चासौ हरिश्च-इष्टदहरिः, तस्मिन् इष्टदहरौ ।

[ राजलक्ष्मीः ] विष्टपहारिणि=जगद्धारिणि । जगज्जालक्लेशसन्तापहारिणि । इष्टदहरौ=अभीष्टप्रदे भगवति विष्णौ । 'हरे' इति पाठे-शिवे इत्यर्थः । तुष्टे=सन्तुष्टे सत्येव । देहिना=शरीरिणा । मनुष्येण । सच्चरितः=सदाचारः । सूनुः=पुत्रः । सती=साध्वी । पतिव्रता । प्रियतमा=प्राणप्रिया भार्या । प्रसादोन्मुखः = प्रसन्नः । स्वामी=प्रभुः । राजा । स्निग्धं = स्नेहास्पदम् । प्रियम् । मित्रं=सुहृत् । अवञ्चकः = अशठः । विश्वासभाजनम् । परिजनः=सेवकवर्गः । निष्क्लेशलेशं=कष्टलेशसम्पर्करहितम् । नितरां क्लेशविकलम् । मनः = मानसम् । रुचिरः = सुन्दरः । मधुरः । आकारः = आकृतिः । स्वरूपम् । स्थिरश्च = ध्रुवः । अविनाशी । विभवः = धनधान्यसम्पत्तिः । विद्यावदातं = विद्योद्भासितम् । ज्ञानगौरम् । मुखं = वदनम् । प्राप्यते = लभ्यते । नान्यथा ।

[ भावार्थः ] प्राणिनामिह भगवति विष्णौ शिवे वा सन्तुष्टे एव सर्वसुखप्राप्तिर्नान्यथा ।

१ 'विष्टप' पा० । २ 'हरे' ।

[ कोशः ] 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः। 'प्रसादस्तु प्रसन्नता' इत्यमरः। 'अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः' इत्यमरः।

[ भाषाटीका ] संसारके सब कष्टों को दूर करनेवाले, अभीष्टप्रद भगवान् विष्णु व शिवजी जब मनुष्य पर प्रसन्न होते हैं तभी सदाचारी पुत्र, सती साध्वी स्त्री, प्रसन्नमुख दयालु स्वामी, स्नेही मित्र, विश्वासपात्र सेवक, सभी क्लेशोंसे रहित शान्त प्रसन्नमन, सुन्दर रूप, स्थिर सम्पत्ति, विद्या से देदीप्यमान चमकता हुआ मुखमण्डल—ये सब बातें प्राप्त होती हैं। अर्थात् भगवान्की कृपा व पूर्वपुण्य के विना विद्या व धन व सुख सम्पत्ति नहीं मिलती है॥ २५॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम्।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा,
सामान्यः सर्वशास्त्रेष्वनुपहतविधिःश्रेयसामेषपन्थाः॥२६॥

[ अन्वयः ] प्राणाघातान्निवृत्तिः, परधन हरणे संयमः, सत्यवाक्यं, काले शक्त्या प्रदानं, परेषां युवतिजनकथामूकभावः, तृष्णास्रोतो विभङ्गः, गुरुषु च विनयः, सर्वभूतानुकम्पा, एष सर्वशास्त्रेषु सामान्यः अनुपहतविधिः—श्रेयसां पन्थाः॥

[ विग्रहः ] प्राणानामाघातः प्राणाघातः, तस्मात्-प्राणाघातात्। परेषां धनं परधनं, तस्य हरणं परधनहरणं, तस्मिन्। सत्यं वाक्यं सत्यवाक्यम्। युवतिजनानां-कथाः—युवतिजनकथाः, तासु मूको भावः--युवतिजनकथामूकभावः। तृष्णायाः स्रोतः तृष्णास्रोतः, तृष्णास्रोतसो विभङ्गः—तृष्णास्रोतोविभङ्गः। सर्वभूतेषु—अनुकम्पा—सर्वभूतानुकम्पा। सर्वाणि च तानि शास्त्राणि तेषु सर्वशास्त्रेषु। अनुपहतो विधिः—अनुपहतविधिः।

[ राजलक्ष्मीः ] प्राणाघातात्=प्राणवधात्। जीववधात्। 'प्राण्याघाता' दिति पाठे तु अर्थः स्पष्ट एव। निवृत्तिः=विमुखता। उपरमः। परधनहरणे=बलात्परद्रव्यादाने। संयमः=आत्मनो निग्रहः। मनसो निग्रहः। सत्यवाक्यं=सत्यवचनम्। सत्यभाषणम्। काले=योग्ये।

उचिते समये च। शक्त्या=यथाशक्ति। प्रदानं=पात्रे दानम्। परेषां युवतिजनकथामूकभावः=परस्त्रीपापकथावाचंयमत्वम्। परदाररहस्यकथामौनम्। तृष्णास्रोतोविभङ्गः=लोभप्रवाहविनिग्रहः। गुरुषु च=गुरुजनेषु च। विनयः=नम्रता। सर्वभूतानुकम्पा=सकलप्राणिदया। एषः=अयम्। सर्वशास्त्रेषु=धर्मशास्त्रादिषु। अनुपहतविधिः=अनिरुद्धानुष्ठानः। अनिषिद्धः। सर्वशास्त्रसम्मत इति यावत्। सामान्यः=सर्ववर्णाश्रमसाधारणः। श्रेयसां=कल्याणानाम्। मङ्गलानाम्। पन्थाः=मार्गः।

[ भावार्थः ] सर्वजीवहिंसात्यागादिरूपो धर्मः सर्वशास्त्रसंमतः सकलसाधारणोऽस्ति स च सर्वैः पालनीयः।

[कोशः] 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः। 'विधिर्विधाने दैवेऽपि' इत्यमरः। 'स्रोतोऽम्बु सरणं स्वतः' इत्यमरः।

[ भाषाटीका ] किसी जीव को न तो सताना, न मारना, दूसरे के धन को हरण करनेसे मन व शरीर को रोकना, सच बोलना, मौके २ से यथाशक्ति दान देते रहना, परस्त्रीजनों की पापकथा न करना, लोभ के वेग को रोकना, गुरुजनों में विनय, सब प्राणियों पर दया रखना,—यह सब शास्त्रों से अनुमोदित सकलजनसाधारण धर्म का मार्ग है ॥ २६ ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
[1]प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ २५ ॥

[ अन्वयः ] नीचैः विघ्नभयेन न प्रारभ्यते खलु, मध्याः प्रारभ्य विघ्नविहताः सन्तो विरमन्ति। उत्तमजनाः प्रारभ्य च विघ्नैः पुनः पुनः प्रतिहन्यमानाः अपि न परित्यजन्ति ॥

१ प्रारब्धमुत्तमगुणाः।

[विग्रहः] विघ्नाद्भयं विघ्नभयम् । तेन । विघ्नैः विहताः--विघ्नविहताः । उत्तमाश्च ते जनाश्च उत्तमजनाः ।

[राजलक्ष्मीः] नीचैः=अधमैः । निकृष्टैः । विघ्नभयेन=प्रत्यूहभिया न प्रारभ्यते खलु=नैव कार्यमारभ्यते । मध्याः=मध्यमश्रेणिनिविष्टा जनाः । प्रारभ्य = कार्यमारभ्याऽपि । विघ्नविहताः = प्रत्यूहपराहताः सन्तः । अन्तरायनिहताः । विरमन्ति = कार्याद्विरता भवन्ति । कार्यं मध्य एव त्यजन्ति । उत्तमजनाः=श्रेष्ठपुरुषास्तु । प्रारभ्य च=कार्यमारभ्य । विघ्नैः=अन्तरायैः । पुनः पुनः= वारं वारम् । मुहुर्मुहुः । प्रतिहन्यमाना अपि=पीड्यमाना अपि । आहन्यमाना अपि । न परित्यजन्ति=कार्यं न सन्त्यजन्ति । कार्यान्न विरमन्ति ।

[भावार्थः] केचिद्विघ्नभयेन कार्यमेव नारभन्ते । केचिन्मध्ये एव त्यजन्ति । ये तु कार्यमारभ्य मध्ये न विरमन्ति ते एव तु श्रेष्ठाः ।

[कोशः] 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः ।

[भाषाटीका] साधारण कोटि के पुरुष विघ्न के भयसे कार्य का प्रारम्भ ही नहीं करते हैं । मध्यम श्रेणि के लोग कार्य को प्रारम्भ कर विघ्न आने पर बीच में ही छोड़ देते हैं । परन्तु श्रेष्ठ लोग कार्य को प्रारम्भ कर देने पर बारंवार विघ्नों के आने पर भी काम को विना पूर्ण किए बीच में नहीं छोड़ते हैं ॥ २७ ॥

**असन्तो नाऽभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः,**
**प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् ।**
**विपद्युच्चैः स्थेयं, पदमनुविधेयं च महतां,**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ २८ ॥**

[अन्वयः] असन्तो नाभ्यर्थ्याः, कृशधनः सुहृदपि न याच्यः, न्याय्या वृत्तिः—प्रिया । असुभङ्गेऽपि मलिनम् असुकरं, विपदि उच्चैः स्थेयं, महतां पदमनुविधेयं च ।–इदं विषममसिधाराव्रतं सतां कनोद्दिष्टम् ? ॥

[विग्रहः] न सन्तः–असन्तः । कृशं धनं यस्यासौ कृशधनः । न्यायादनपेता

न्याय्या । असूनां भङ्गः—असुभङ्गः, तस्मिन् । न सुकरम् असुकरम् । असेः धारा असिधारा, असिधारा इव व्रतम्—असिधाराव्रतम् ।

[ राजलक्ष्मीः ] असन्तः=खलाः । दुष्टाः । दुर्जना धनिनः । नाभ्यर्थ्याः=न प्रार्थनीयाः । कृशधनः=स्वल्पद्रव्यः । क्षीणद्रविणः । सुहृदपि = मित्रमपि । न याच्यः=न प्रार्थनीयः । न्याय्या=उचिता । न्यायानुमोदिता । समुचिता । वृत्तिः = जीवनोपायः । जीविका प्रिया = हृदयप्रिया भवति । हृद्या रुचिरा च भवति नान्या । केचित्तु प्रिया न्याय्या वृत्ति राश्रयणीयेत्यर्थमाहुस्ते विद्वांसः । मलिनं = पापम् । पापकार्यम् । असुभङ्गेऽपि = प्राणात्ययेऽपि । प्राणनाशेऽपि । असुकरम् = दुष्करम् । विपदि = विपत्तौ । उच्चैः = समुन्नतं यथा स्यात्तथा । स्थेयम् = स्थातव्यम् । विपदि दैन्यं न कार्यमित्याशयः । महतां = श्रेष्ठानाम् । शिष्टानाम् । पदं= स्थानम् । पदवीं वा । अनुविधेयम्=अनुसरणीयम् । इदं = पूर्वोक्तम् । विषमं = कठिनम् । दुष्करम् । असिधाराव्रतं = कृपाणधाराकठिनो नियमः । सद्भ्यः केनोद्दिष्टं = केनोपदिष्टम् ? । केनपुंसासमुपदिष्टम् । केन = ब्रह्मणैवोपदिष्टमिति वा । शिखरिणी वृत्तम् ।

[ भावार्थः ] खला न याच्याः, स्वल्पधनः सुहृदपि न याचनीयः, न्याय्या जीविका कार्या, पापकर्म प्राणप्रयाणेऽपि न कार्यम्, विपदि धैर्यमास्थेयम्, शिष्टानां पदवीं च खल्वनुसर्त्तव्या,—इति कठिनं खड्गधाराकारं तीक्ष्णतरं व्रतं सद्भ्यो न जानीमः केनोपदिष्टम् ! ।

[ कोशः ] 'वृत्तिर्वर्त्तनजीवने' इत्यमरः । 'विपत्त्यां विपदापदौ' इत्यमरः ।

[ भाषाटीका ] दुष्टों से कुछ भी न माँगना, बेचारे निर्धन मित्रों से भी कुछ न माँगना, धर्मानुमोदित जीविका का आश्रयण करना, पापकर्म तो प्राण जाते हो तो भी नहीं करना, विपत्ति में भी अपनी मनोवृत्ति को नीची नहीं करना, सन्मार्ग पर चलना, इस प्रकार तलवार की धार की तरह कठिन इस व्रत का सज्जनों को न जाने किसने उपदेश किया है ? ॥ २८ ॥

**क्षुत्क्षामोपि[1] जराकृशोऽपि शिथिलप्राणोपि[2] कष्टां दशा-**
**मापन्नोऽपि[3] विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।**
**मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धःस्पृहः**
**किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २६ ॥**

[अन्वयः] क्षुत्क्षामोपि जराकृशोपि शिथिलप्राणोऽपि कष्टां दशामापन्नोपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि, मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः मानमहताम् अग्रेसरः केसरी जीर्णं तृणमत्ति किम् ? ॥

[विग्रहः] क्षुधा क्षामः क्षुत्क्षामः । जरसा कृशः जराकृशः । शिथिलाः प्राणा यस्यासौ–शिथिल प्राणः । विपन्ना दीधितिर्यस्यासौ विपन्नदीधितिः । इभानामिन्द्राः इभेन्द्राः । मत्ताश्च ते इभेन्द्राश्च मत्तेभेन्द्राः, तेषां विभिन्ना ये कुम्भाः-मत्तेभेन्द्रविभिन्नकुम्भाः, तेषां पिशितं, तस्य ग्रासः तस्मिन्नेवैकं बद्धा स्पृहा येनासौ –मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः । मानेन महान्तः, मानमहान्तः, तेषाम् मानमहताम् । अग्रे सरतीति अग्रेसरः ।

[राजलक्ष्मीः] क्षुत्क्षामोऽपि=क्षुधाक्षीणोऽपि । बुभुक्षाकृशोऽपि । जराकृशोऽपि=जराजीर्णोऽपि । शिथिलप्राणोऽपि विश्लथपराक्रमोऽपि । शिथिलशक्तिरपि । कष्टां=कृच्छ्राम् । दशाम्=अवस्थाम् । आपन्नोऽपि =सम्प्राप्तोऽपि । विपन्नदीधितिरपि=विनष्टकान्तिरपि प्राणेषु=असुषु । नश्यत्स्वपि=विनश्यत्स्वपि । प्राणेषूद्गच्छत्स्वपि । मत्तेभेन्द्रविभिन्न-कुम्भपिशितग्रासैकबद्धस्पृहः=मत्तगजेन्द्रविदीर्णगण्डस्थलमांसकवलैकनिबद्धाभिलाषः । मानमहताम्=अभिमानोन्नतानाम् । अग्रेसरः=पुरस्सरः । केसरी=पञ्चाननः । जीर्णं=पुराणम् । तृणं=घासम् । अत्ति किम्=भक्षयति किम् ? । नैव भक्षयतीतित्यर्थः ।

---

१ 'रतिसेनस्येद'मिति तु सुभाषितावलिशार्ङ्गधरपद्धत्यादौ दृश्यते ।
२ 'शिथिलप्रायोऽपि' । ३ 'धीधृतिरपि' पा० ।

[भावार्थः] सर्वथा जीर्णोऽशक्तोऽपि नरकेसरी हस्तिमस्तकमांसमेवाश्नाति-न तृणम् । शार्दूलविक्रीडितं वृत्तम् ।

[कोशः] 'अशनाया बुभुक्षा क्षुद्ग्रासस्तु कवलः पुमान्' इत्यमरः । 'शक्तिः पराक्रमः प्राणः' इत्यमरः । 'इभः स्तम्बेरमः पद्मी इत्यमरः । 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः ।

[भाषाटीका] क्षुधा से मुरझाया हुआ, बुढापे से निर्बल व कृश, शिथिल-पराक्रम, कष्ट दशा में पड़ा हुआ, क्षीणकान्ति कण्ठगत प्राण होते हुए भी मस्त हस्ती के मस्तक को भेदन कर उसके मांस के खाने की इच्छा करने वाला परम मानी सिंह क्या कभी घास भी खाता है ? । कदापि नहीं ॥ २९ ॥

**स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः**
**श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधा शान्तये ।**
**सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं**
**सर्वः कृच्छ्रगतोपि वाञ्छति जनःसत्त्वानुरूपं फलम् ॥ ३० ॥**

[अन्वयः] श्वा स्वल्पस्नायुवसावशेषमलिनं निर्मांसमपि गोरस्थि लब्ध्वा परितोषमेति । तु तत् तस्य क्षुधा शान्तये न । सिंहः अङ्कमागतमपि जम्बुकं त्यक्त्वा द्विपं निहन्ति, कृच्छ्रगतोऽपि सर्वो जनः सत्त्वानुरूपं फलं वाञ्छति ॥

[विग्रहः] स्नायुश्च वसा च स्नायुवसे । स्नायुवसयोरवशेषः,स्नायुवसावशेषः, स्वल्पश्चासौ स्नायुवसावशेषश्च स्वल्पस्नायुवसावशेषः, तेन मलिनं-स्वल्पस्नायुवसावशेषमलिनम् । तत् । निर्गतं मांसात्—निर्मांसम् । क्षुधायाः शान्तिः क्षुधाशान्तिः, तस्यै क्षुधाशान्तये । कृच्छ्रं गतः—कृच्छ्रगतः । सत्त्वस्य अनुरूपं—सत्त्वानुरूपं, तत् ।

[राजलक्ष्मीः] श्वा=कुक्कुरः । स्वल्पस्नायुवसावशेषमलिनं=स्वल्पतमाऽवशिष्टस्नायुवसामलिनितम् । स्नायुवसालेशमलिनम् । निर्मांस-

१ 'निर्मांसमप्यस्थि यच्छ्वा लब्ध्वे'ति गौडाः पठन्ति । तत्र च 'यन्निर्मांसमस्थिलब्ध्वा श्वा परितोषमेति तत्तस्य क्षुधाशान्तये तु न' इतिच तत्र युक्तोऽर्थः

मपि=मांसरहितमपि । गोः=धेनोः । अस्थि=कीकसम् । लब्ध्वा=प्राप्य । परितोषं=सन्तोषम् । एति=गच्छति । तु=परन्तु । तत्=गवास्थि । तस्य=शुनः । क्षुधाशान्तये=बुभुक्षाशान्तये । न=नैव भवति । सिंहः=मृगेन्द्रस्तु । अङ्कमागतमपि=उत्सङ्गमागतमपि । जम्बुकं=शृगालं । त्यक्त्वा=विहाय । द्विपं=गजेन्द्रं । निहन्ति=हिनस्ति । कृच्छ्रगतोऽपि=कष्टनिपतितोऽपि । सर्वो जनः=सर्वो लोकः । सत्त्वानुरूपं=स्वबलानुरूपम् । स्वपौरुषतुल्यम् । फलं=लाभम् । वाञ्छति=इच्छति । 'शार्दूलविक्रीडितं वृत्तम्' ।

[ कोशः ] 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः । 'शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः' इत्यमरः ।

( भाषाटीका ) नस और चर्बी के बचे हुए थोड़े से भाग से मलिन (गन्दी) मांस रहित गौ की हड्डी को पाकर भी कुत्ता बड़ा प्रसन्न होता है, यद्यपि उससे उसकी भूख नहीं मिट सकती है। और सिंह तो गोद में आए हुए गीदड़ को छोड़कर भी हाथी को ही मारता है। ठीक है, सभी लोग अपने २ बल पुरुषार्थ के अनुसार ही फल चाहते हैं। सिंह अपने स्वरूपानुसार हाथी को मारता है कुत्ता अपने स्वरूपानुसार सूखी हड्डी पाकर ही प्रसन्न हो जाता है॥३०॥

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते, गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ३१ ॥

[ अन्वयः ] श्वा पिण्डदस्य [ पुरतः ] लाङ्गूलचालनम्, अधश्चरणावपातं, भूमौ निपत्य वदनोदरदर्शनञ्च कुरुते, गजपुङ्गवस्तु धीरं विलोकयति, चाटुशतै भुङ्क्ते । [ 'चरणावघात'मिति तु सुन्दरः पाठः ] ॥

[ विग्रहः ] लाङ्गूलस्य चालनं—लाङ्गूलचालनम् । तत् । चरणयोरवपातः चरणावपातः, तम् । वदनञ्चोदरञ्च वदनोदरं, तस्य दर्शनं, वदनोदर दर्शनं, तत् ।

पिण्डं ददातीति पिण्डदः । गजः पुङ्गव इव—गजपुङ्गवः । चाटूनां शतानि—चाटुशतानि । तैः ।

[ राजलक्ष्मीः ] श्वा=कुक्कुरः । पिण्डदस्य=अन्नदातुः । पुरतः । लाङ्गूलचालनं=पुच्छभ्रमणम् । पुच्छपरिवर्त्तनम् । अधः=नीचैः । चरणावपातं=चरणयोः पतनम् । अवघातमिति पाठेताभ्यां भूमिलेखनम् । भूमौ=पृथिव्यां । निपत्य=पतित्वा । वदनोदरदर्शनञ्च=मुखपिचण्डदर्शनञ्च । आननजठरदर्शनञ्च । कुरुते = विधत्ते । गजपुङ्गवस्तु=गजेन्द्रस्तु । वारणराजस्तु । धीरं–सधैर्यम् । विलोकयति=पश्यति । चाटुशतैश्च=प्रियवाक्यशतैश्च । भुङ्क्ते=कथञ्चिद्भक्षयति च ।

[ भावार्थः ] श्वाऽन्नदस्य पुरतो नानाविधं पुच्छचालनादिकं करोति, गजेन्द्रो मिष्टवाक्यसहस्रेणाऽपि कथञ्चिद्भुङ्क्तइति नीचोत्तमजनयोर्महदन्तरम् ।

[ कोशः ] 'पुच्छोऽस्त्री लूमलाङ्गूले' इत्यमरः । 'पुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' । इत्यमरः । 'चटु चाटु प्रियं वाक्य'—मित्यमरः ।

( भाषाटीका ) कुत्ता तो रोटीके टुकड़े देनेवाले अपने मालिक के सामने पोंछ हिलाता है, नीचे पैरों पर लोटता है, भूमिपर गिर के पेट और मुख दिखलाता है । परन्तु गजराज तो सामने रखे हुए बढ़िया २ पक्वान्नों को भी बड़े धैर्य से देखता है और हजारों खुशामद करनेपर भी किसी तरह खाता है । नीच और श्रेष्ठ का यही अन्तर है ॥ ३१ ॥

**परिवर्तिनि संसारे मृतः[1] को वा न जायते ।**
**स जातो येन जातेन याति वंशः समुन्नतिम् ॥ ३२ ॥**

---

१ 'गौडास्तु 'संसारेऽमृतः को, यो हि जायते' इति पठित्वा योहि जायते सः कः अमृतः ! किन्तु सर्वोऽपि मृत एव । म्रियत एवेत्यर्थमाहुः । युक्ताऽयुक्तत्वं सुधीभिरेवाऽत्र विभावनीयम् ॥

[ अन्वयः ] परिवर्तिनि संसारे को वा न जायते । स एव जातः ( श्रेष्ठः ) येन जातेन वंशः- समुन्नतिं याति ॥

[ विग्रहः ] परिवर्त्तते तच्छीलः परिवर्त्ती, तस्मिन् परिवर्त्तिनि । सम्यगुन्नतिः, समुन्नतिः । ताम् ।

[ राजलक्ष्मीः ] परिवर्त्तिनि = परिवर्त्तनशीले । नित्यं क्षीयमाणे वर्द्धमाने च । संसारे=जगति । को वा = को वै पुरुषः । न मृतः=नैव मृत्युवशङ्गतः । अतिमहान्तोऽपि मनुजा राजर्षयश्च मृता एव । [ को वा=को वै । न=नैव ] जायते=उत्पद्यते । सर्वेऽपि उत्पद्यन्ते विनश्यन्ति च । किन्तु सः = स एव पुमान् । जातः=सुजातः । येन=पुंसा । जातेन= उत्पन्नेन सता । वंशः=कुलम् । समुन्नतिं=समुत्कर्षम् । समृद्धिम् । याति= गच्छति । भजते । समश्नुते ।

[ भावार्थः ] परिवर्त्तनशीले संसारे सर्वो जायते म्रियते च । स एव तु सुजा- तो येन वंशस्योन्नतिर्भवति ।

[ कोशः ] 'कुलान्यभिजनान्वयौ । वंशोऽन्वयः सन्तानः' इत्यमरः ।

[ भाषाटीका ] इस परिवर्त्तनशील संसार में कौन नहीं मरता है और कौन नहीं जन्मता है । परन्तु उसीका जन्म सफल है जिससे वंश ( कुल, खान्दान ) उन्नति को प्राप्त होता है ॥ ३२ ॥

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य, शीर्यते वन एव वा ॥ ३३ ॥

[ अन्वयः ] मनस्विनः कुसुमस्तबकस्य इव द्वयी वृत्तिः ( अस्ति ), सर्वलो- कस्य मूर्ध्नि वा ( तिष्ठति ), वन एव वा शीर्यते ।

[ विग्रहः ] कुसुमस्य स्तवकः, कुसुमस्तबकः, तस्य-कुसुमस्तवकस्य । प्रशस्तं मनोऽस्यास्तीति मनस्वी, तस्य—मनस्विनः । सर्वश्चासौ लोकश्च सर्वलोकः, तस्य सर्वलोकस्य ।

[ राजलक्ष्मीः ] मनस्विनः = मानिनः पुरुषस्य । कुसुमस्तबकस्येव=

पुष्पगुच्छकस्येव । द्वयी = द्विविधा । वृत्तिः = वर्त्तनं । व्यवहारः । अवस्थितिरिति यावत् । सर्वलोकस्य=सकलजनस्य । मूर्ध्नि वा = मस्तके वा । शिरसि वा । तिष्ठतीति शेषः । वने एव वा = कानने एव वा । शीर्यते=विशीर्णो भवति । विनश्यति । कुसुमगुच्छकस्यापीदृश्येव गतिरिति, सर्वविदितमेव ।

[ भावार्थः ] पुष्पस्तवको यथा सर्वेषां मस्तके तिष्ठति, वने एव वा विनश्यति, तथैव मनस्वी उन्नतं वा पदमधिरोहति—एकान्ते वन एव वा कालं नयति ।

[ कोशः ] 'गुच्छस्तु स्तवकः' इत्यमरः । 'वृत्तिर्वर्तनजीवने' इत्यमरः ।

[ भाषाटीका ] मानी मनुष्य फूल के गुच्छे की तरह दो ही प्रकार से जीवन व्यतीत करता है । वह या तो सब के सिर पर ही रहता है, या बन में ही ( कहीं कोने में ही ) सूख के बिखर ( नष्ट हो ) जाता है ॥ ३३ ॥

**सन्त्यन्येऽपि बृहस्पतिप्रभृतयः सम्भाविताः पञ्चषा-**
**स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।**
**द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ [1]भासुरा**
**भ्रातः ! पर्वणि पश्य दानवपतिः [2]शीर्षावशेषाकृतिः ॥३४॥**

[ अन्वयः ] भो भ्रातः ! पश्य, बृहस्पतिप्रभृतयः अन्येऽपि पञ्चषाः सम्भाविताः ( ग्रहाः ) सन्ति, ( किन्तु ) विशेषविक्रमरुचिः शीर्षावशेषाकृतिः दानवपतिः एष राहुः तान्प्रति न वैरायते । किन्तु भासुरौ दिनेश्वरनिशाप्राणेश्वरौ द्वावेव पर्वणि ग्रसते ।

[ विग्रहः ] बृहस्पतिः प्रभृतिर्येषान्ते बृहस्पतिप्रभृतयः । पञ्च वा षट् वा पञ्चषाः । विशेषश्चासौ विक्रमश्च विशेषविक्रमः, 'विशेषविक्रमे रुचिर्यस्यासौ—विशेषविक्रमरुचिः । शीर्षस्य अवशेषः—शीर्षावशेषः, शीर्षावशेष एवाकृतिर्यस्यासौ शीर्षावशेषाकृतिः । दानवानां पतिः—दानवपतिः । वैरं करोति वैरायते । निशायाः प्राणेश्वरः निशाप्राणेश्वरः । दिनेश्वरश्च निशाप्राणेश्वरश्च दिनेश्वरनिशाप्राणेश्वरौ । तौ ।

---

१ 'भास्वरौ' पा० । २ 'शीर्षावशेषीकृतः' पा० ।

[ राजलक्ष्मीः ] भ्रातः = हे सखे ! । पश्य=विलोकय । (यत्-) बृहस्पतिप्रभृतयः = देवगुरुप्रभृतयः । अन्येऽपि=सूर्येन्दुभ्यामितरेऽपि । पञ्चषाः=पञ्च वा षड् वा । सम्भाविताः=मान्याः । महान्तः । श्रेष्ठाः । ( ग्रहाः ) । सन्ति=वर्त्तन्ते । ( किन्तु ) विशेषविक्रमरुचिः=विशिष्टपराक्रमदुर्ल्ललितः । पराक्रमातिशयप्रदर्शनप्रसक्तः । महाबलविरोधाभिलाषः । शीर्षावशेषाकृतिः=अवशिष्टशिरोमात्रस्वरूपः । दानवपतिः=दैत्यराट् । एषः=अयं । राहुः=स्वर्भानुः । तान् प्रति=बृहस्पत्यादीन्प्रति । न वैरायते = न वैरं करोति । न वैरं प्रदर्शयति च । किन्तु-भासुरौ=प्रकाशमानौ । देदीप्यमानौ । दिनेश्वरनिशाप्राणेश्वरौ = भास्करचन्द्रमसौ । द्वावेव=उभावेव । पर्वणि = अमावास्यापूर्णिमयोः । ग्रसते = निगिलति । आक्रमते । शार्दूलविक्रीडितं वृत्तम् ।

[ भावार्थः ] सत्स्वपि गुर्वादिग्रहेषु राहुः भास्वरं सूर्यं चन्द्रमेव च ग्रसते नान्यान् ।

[ कोशः ] 'विक्रमस्त्वतिशक्तिता' इत्यमरः । 'तिथिभेदे क्षणे पर्व' इत्यमरः ।

[ भाषाटीका ] देखो भाई !, बृहस्पति आदि पांच छ सुप्रसिद्ध ग्रहों के रहते हुए भी विशेषपराक्रम दिखाने के लिए उत्सुक दानवराज राहु—जिसका केवल शिर ही बाकी रह गया है—सूर्य चन्द्रमा को ही—जो सबसे बड़े तेजस्वी हैं—पर्व पर ( पूर्णिमा व अमावस्या को ) ग्रसता है, दूसरों को नहीं । ठीक भी है, पराक्रमी लोग बड़ों पर ही पराक्रम दिखाते हैं, छोटों पर नहीं ॥ ३४ ॥

वहति [1]भुवनश्रेणिं शेषः फणाफलकस्थितां,
कमठपतिना मध्येपृष्ठं सदा स[2] च धार्यते ।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
दहह ! महतां निःसीमानश्चरित्रविभूतयः ॥ ३५ ॥

---

१ 'श्रेणीं' । २ 'स विधार्यते' ।

[ अन्वयः ] शेषः फणाफलकस्थितां भुवनश्रेणिं वहति, सच कमठपतिना मध्येपृष्ठं सदा विधार्यते। तमपि पयोधिः अनादरात् क्रोडाधीनं कुरुते। अहह! महतां चरित्रविभूतयः निःसीमानः [ भवन्ति ]॥

[ विग्रहः ] भुवनस्य श्रेणिः भुवनश्रेणिः, तां भुवनश्रेणिम्। फणा एव फलकं, [ यद्वा फणाः फलकमिव ] फणाफलकं, तत्र स्थिता फणफलकस्थिता, ताम्। कमठानां पतिः, कमठपतिः, तेन। पृष्ठस्य मध्ये इति मध्येपृष्ठम्। क्रोडस्य अधीनः क्रोडाधीनः, तम्। सीम्नो निर्गताः–निःसीमानः। चरित्राणां विभूतयः–चरित्रविभूतयः।

[ राजलक्ष्मीः ] शेपः = अनन्तः। सर्पराजः। फणाफलकस्थितां= फटापट्टिकाऽवस्थिताम्। भुवनश्रेणिं = लोकपङ्क्तिम्। वहति=धारयति। स च=शेषश्च। कमठपतिना=भगवदवतारेण। पुराणकमठराजेन। सदा = सर्वदा। मध्यपृष्ठं—पृष्ठमध्ये। धार्यते=उह्यते। तमपि = कमठराजमपि। पयोधिः=समुद्रः। न आदरः अनादरः, तस्मात्–अनादरात्= लीलया। अनायासेन। क्रोडाधीनम्=भुजान्तरगतम्। उत्सङ्गगतम्। कुरुते=करोति। अहह=आश्चर्यमेतत्। महतां=महात्मनाम्। चरित्रविभूतयः=शीलगुणसम्पदः। कार्यसम्पदः। चारित्र्यसम्पत्तयः। निःसीमानः=अपरिमिताः। सीमातिगाः। निरवधयः। भवन्तीति शेषः।

[ भावार्थः ] महतां विभूतयोऽपरिमेया अनन्ताश्च।

[ कोशः ] 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी' इत्यमरः। 'कूर्मे कमठकच्छपौ' इत्यमरः। 'क्रोडः शनौ शूकरे ना न पुमानङ्करक्षसोः' इति मेदिनी।

[ भाषाटीका ] भगवान् शेषनाग—सम्पूर्ण लोकों की पंक्ति को (भूमण्डल को) अपने फण रूपी पीढ़े पर रखे हुए हैं। और कूर्मावतार भगवान् कच्छपराज उन (शेषनाग) को भी अपनी पीठ पर रखे हुए हैं। उस कच्छपराज को भी समुद्र अपनी गोद में अनायास ही धारण किए हुए हैं। अहो! बड़े लोगों के चरित्रों की विभूतियाँ अपरिमित और कल्पनातीत होती हैं॥ ३५॥

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः[1] ।
तुषाराऽद्रेः [2]सूनोरहह ! पितरि क्लेशविवशे
नचासौ सम्पातः पयसि पयसां पत्युरुचितः ॥ ३६ ॥

[ अन्वयः ] तुषाराद्रेः सूनोः उद्गच्छद्बहलदहनोद्गारगुरुभिः समदमघवन्मुक्तकुलिशप्रहारैः पक्षच्छेदो वरम् । ( किन्तु ) अहह ! पितरि क्लेशविवशे (सति) पयसां पत्युः पयसि असौ सम्पातो नोचितः ॥

[ विग्रहः ] पक्षाणां छेदः—पक्षच्छेदः । उद्गच्छंश्च बहलश्चासौ दहनश्च उद्गच्छद्बहलदहनः, तस्योद्गाराः—उद्गच्छद्बहलदहनोद्गाराः, तैः गुरवः, तैः । समदश्चासौ मघवा च समदमघवा, समदमघवता मुक्तश्च तत्कुलिशश्च तेन तस्य वा प्रहाराः—समदमघवन्मुक्तकुलिशप्रहाराः, तैः समदमघवन्मुक्तकुलिशप्रहारैः । तुषारस्य अद्रिः तुषाराद्रिः क्लेशेन विवशः क्लेशविवशः, तस्मिन् क्लेशविवशे ।

[ राजलक्ष्मीः ] तुषाराद्रेः=हिमवतः । सूनोः=पुत्रस्य मैनाकस्य । उद्गच्छद्बहलदहनोद्गारगुरुभिः=उत्सर्पत्सान्द्रवह्निपटलसमुद्गारसुदुस्सहैः । समदमघवन्मुक्तकुलिशप्रहारैः=गर्वोद्धुरमहेन्द्रविमुक्तवज्राघातैः । पक्षच्छेदः=गरुच्छेदः । पक्षभङ्गः स्याद्यदि । वरं=मनाक् प्रियः । ( किन्तु ) अहह—इति खेदे । पितरि=स्वजनके हिमालये । क्लेशविवशे=मघवन्मुक्तवज्रप्रहारजनितपक्षच्छेदक्लेशविधुरे सति । वज्राघातपीडापरवशे सति । तदवस्थे सति । पयसां पत्युः=पयोनिधेः । पयसि=जले । असौ=अयञ्जगद्विदितः । सम्पातः=निमज्जनम् । कूर्दनम् । न च=नैव । उचितः=योग्यः ।

---

१ 'बहुल' ।

२ इन्द्रने सब पर्वतों के पाँख काट दिए थे । वह इन्द्र हिमालय के पंख काटकर उसके पुत्र मैनाक के भी पंख काटने जब आया तो वज्र की चोट खाकर भी मैनाक समुद्र में जाकर छिप गया था । और इस प्रकार वह पक्षछेदन से बच गया था ।

[ भावार्थः ] पर्वतानां पक्षांश्छेत्तुं प्रवृत्तो महेन्द्रो हिमवतः पक्षांश्चिच्छेद । तं स्वपितरं तथैव च परित्यज्य पक्षच्छेदभीतस्तत्पुत्रो मैनाको यत्समुद्रजले निपपात, तत्तेन नोचितं कृतम् ।

[ कोशः ] 'तुषारस्तुहिनं हिमम्' इत्यमरः । 'इन्द्रो मरुत्वान्मघवा' इत्यमरः । 'ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः' इत्यमरः । 'बहलं सान्द्रम्' इति कोशः ।

[ भाषाटीका ] बड़े क्रोध व गर्व के साथ इन्द्र के द्वारा चलाये गए एवं उठती हुई अग्नि की गहरी लपटों से असह्य जो वज्र उसके प्रहारों से हिमालय के पुत्र मैनाक के यदि पंख कट भी जाते तो भी उत्तम होता । परन्तु हाय ! अपने पिता हिमालय को पंख कटने की पीडारूपी विपत्ति में ही छोड़कर इस प्रकार समुद्र के जल में छिपकर अपने को बचाना मैनाक को कभी उचित नहीं था ॥ ३६ ॥

**यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः ।**
**तत्तेजस्वी पुरुषः परकृतनिकृतिं[1] कथं सहते ! ॥ ३७ ॥**

[ अन्वयः ] अचेतनोऽपि इनकान्तः सवितुः पादैः स्पृष्टः यत् प्रज्वलति ; तत् तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ।

[ विग्रहः ] न चेतनः—अचेतनः । परेण कृता परकृता, परकृता चासौ निकृतिश्च—परकृतनिकृतिः, ताम्—परकृतनिकृतिम् । इनः कान्तो यस्यासौ इनकान्तः ।

[ राजलक्ष्मीः ] अचेतनोऽपि=जडोऽपि । चैतन्यलेशशून्योऽपि । इनकान्तः=सूर्यकान्तमणिः । सवितुः=सूर्यस्य । पादैः=किरणैः । पक्षे-चरणैश्च । स्पृष्टः=संस्पृष्टः । आक्रान्तश्च । यत्=यदा । यतः । प्रज्वलति=दीप्यते । क्रोधात्प्रज्वलतीव वा । तत्=तर्हि । तदा । तेजस्वी=प्रतापी । प्रतापवान् । पुरुषः=पुमान् । परकृतनिकृतिं=शत्रुकृतं निकारम् । शत्रुकृतां । धर्षणाम् । 'विकृतिं'मितिपाठे=विकृतिं=विकारम् । अपमानमिति

१ 'विकृतिं' ।

यावत् । कथं सहते=कथङ्कारं क्षमते । कुतो नु सहते ? । सा नैव सोढव्या । आर्या जातिः ।

[भावार्थः] यदचेतनोऽपि सूर्यकान्तमणिः पराभवं न सहते तत् कथं तेजस्वी तं सहेत ।

[ कोशः ] 'इनः पत्यौ नृपार्कयोः' इति मेदिनीकोशः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः ।

[ भाषाटीका ] जब जड सूर्यकान्तमणि भी सूर्य के पैरों (किरणों व चरणों) से छू जाने से ही जल उठता है, तो तेजस्वी चेतन मनुष्य कैसे अपमान सहन कर सकता है ? । उसे सहन नहीं करना चाहिए ॥ ३७ ॥

**सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।**
**प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥ ३८ ॥**

[ अन्वयः ] शिशुः अपि सिंहः मदमलिनकपोलभित्तिषु गजेषु निपतति, सत्त्ववतामियं प्रकृतिः, वयः तेजसो हेतुः न खलु ॥

[विग्रहः] मदेन मलिनाः कपोलानां भित्तयो येषान्ते मदमलिनकपोलभित्तयः, तेषु मदमलिनकपोलभित्तिषु । यद्वा-[भित्तिशब्द उत्तरपदे प्रशंसावचनः,] कपोला भित्तय इव कपोलभित्तयः । [ उपमितं व्याघ्रादिभिरिति च समासः, व्याघ्रादेराकृति गणत्वात् ] । सत्त्वमस्त्येषां ते सत्त्ववन्तः, तेषाम् सत्त्ववताम् ।

[ राजलक्ष्मीः ] शिशुरपि=बालोऽपि । स्तनन्धयोऽपि । सिंहः=मृगेन्द्रः । मदमलिनकपोलभित्तिषु=दानजलमलिनगण्डस्थलेषु । गजेषु=हस्तिषु । निपतति=सम्पातं करोति । कूर्दते । गजानेव हन्तुं प्रचलति । सत्त्ववतां=तेजस्विनाम् । इयम्=एषा । तेजस्विता । प्रकृतिः=स्वभावः । 'वर्त्तते' इति शेषः । वयः=अवस्था । तेजसः=पराक्रमस्य । सत्त्वस्य च । हेतुः=कारणं । न खलु=नैव भवति । आर्या जातिः ।

[ भावार्थः ] महान्तो हि प्रकृत्यैव तेजस्विनः, तत्रावस्था न हेतुः । पश्य सिंहशावको गजानेव हन्तुं मातुरङ्कात्सहसा धावति ।

[ कोशः ] स्यादुत्तानशयो बालः पृथुकः शावकः शिशुः' इत्यमरः ।

[ भाषाटीका ] सिंह का बच्चा भी मत्त हाथियों को मारने दौड़ता है । तेजस्वियों की प्रकृति ही ऐसी (पराक्रमप्रवण) होती है, इसमें अवस्था कारण नहीं है

**जातिर्यातु रसातलं [1]गुणगणस्तस्याप्यधो [2]गच्छता-**
**च्छीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ।**
**शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं**
**येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ३९ ॥**

[ अन्वयः ] जातिः रसातलं यातु, गुणगणस्तस्याप्यधो गच्छतात् । शीलं शैलतटात्पततु, अभिजनो वह्निना सन्दह्यतां, शौर्ये वैरिणि वज्रमाशु निपततु । ( किन्तु ) नः केवलमर्थोऽस्तु । एकेन येन विना इमे समस्ता गुणाः तृणलवप्रायाः ( सन्ति ) ।

[ विग्रहः ] रसायाः तलं रसातलम् । तत् । गुणानां गणः गुणगणः । शैलस्य तटं-शैलतटं, तस्मात् । तृणस्य लवः, तस्य प्रायाः-तृणलवप्रायाः ।

[ राजलक्ष्मीः ] जातिः=ब्राह्मणत्वादिजातिः । रसातलं=भुवोऽधस्तलं=पातालम् । यातु=गच्छतु । गुणगणः=दयादाक्षिण्यौदार्यधैर्याऽऽनृशंस्यादिगुणग्रामः । तस्यापि=पातालस्यापि । अधः=नीचैः । तत्रापीतिपाठेऽपि—पातालेऽप्यध इत्यर्थः । गच्छतात्=यातु । शीलम्=सदाचारः । सद्वृत्तम् । शैलतटात्=पर्वततटात् । गिरिप्रान्तात् । पततु=निपततु । भ्रंशताम् । अभिजनः=कुलम् । वह्निना=अग्निना । सन्दह्यतां=भस्मीभवतु । वैरिणि=शत्रौ । शौर्ये=पराक्रमे च । आशु=त्वरितमेव । वज्रं=कुलिशम् । निपततु=समभ्येतु । पततु । ( किन्तु ) नः=अस्माकन्तु । केवलम्=एकान्ततः । एकः । अर्थः=धनमेवास्तु । एकेन येन विना=केवलेन येन धनेन विना । इमे = एते । समस्ताः=

---

१ 'तत्रापि' । २ 'गच्छतु' पा० ।

सकलाः गुणाः=जात्यौदार्यशौर्यादयः। तृणलवप्रायाः। तृणलवतुल्याः। तृणखण्डसदृशाः निरर्थका इत्यर्थः। 'शार्दूलविक्रीडितं वृत्तम्।'

[भावार्थः] इदानीं लोके धनेनैव सर्वाणि कार्याणि सिध्यन्ति। जात्यादिकं कोऽपि न गणयति।

[कोशः] 'कुलान्यभिजनान्वयौ' इत्यमरः। 'शीलं स्वभावे सद्वृत्ते' इत्यमरः।

(भाषाटीका) जाति (ब्राह्मणत्वादि) चाहे रसातल को चली जाए, गुण उस (पाताल) से भी और नीचे चले जाएं, सदाचार व शिष्टाचार पहाड़ पर से गिर कर समाप्त हो जाएं, वंश (खानदान) आग में जल जाए, शूर वीरतारूपी वैरीपर चाहे वज्र गिरे, पर हमें तो केवल एक धन चाहिए, जिस धन के विना ये सब पूर्वोक्त गुण तृण (घास) के टुकड़े की तरह व्यर्थ हैं। अर्थात् जगत् में आजकल धन की ही पूछ है॥ ३९॥

तानिन्द्रियाण्यविकलानि[1] तदेव नाम[2]
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः [3]स एव
त्वन्यः[4] क्षणेन भवतीति विचित्रमेतत्॥ ४०॥

[अन्वयः] अविकलानि तानि इन्द्रियाणि, तदेव नाम, अप्रतिहता सा बुद्धिः तदेव वचनम्, अर्थोष्मणा विरहितः स एव तु पुरुषः क्षणेन अन्यो भवति एतद्विचित्रम्।

[विग्रहः] न विकलानि अविकलानि। न प्रतिहता अप्रतिहता। अर्थस्योष्मा अर्थोष्मा, तेन अर्थोष्मणा।

[राजलक्ष्मीः] अविकलानि=वैकल्यरहितानि। दोषशून्यानि। कार्यक्षमाणि। तानि=तान्येव। पूर्ववदेव शब्दादिविषय ग्राहकाणि।

१ 'सकलानि'। २ 'कर्म'। ३ 'पुरुषः क्षणेन सोऽप्यन्य एव' ४ 'बाह्यः'।

विषयग्राहकाणि। इन्द्रियाणि=चक्षुरादीन्द्रियाणि। सन्तीति शेषः। तदेव=पूर्ववदेव। नाम=नामधेयम्। अप्रतिहता=अकुण्ठिता। सा=सैव। पूर्ववदेव। बुद्धिः=मतिः। तदेव=पूर्ववदेव। ओजस्वि, सालङ्कृति, सरसञ्च। वचनम्=उक्तिः। वचः। [ किन्तु- ] अर्थोष्मणा=धनोष्मणा। विरहितः=रहितः। स एव तु=स एव खलु। तादृश एव हस्तपादादियुतः। पुरुषः=पुमान्। क्षणेन=क्षणादेव। अर्थविगमकाल एव। अन्यः=इतर इव। इतरवदेव। भवति=जायते। एतत्=इदम्। विचित्रम्=अद्भुतम्। आश्चर्यजनकम्।

[ भावार्थः ] धनशून्यः पुमान् सर्वगुणगणालङ्कृतोऽपि क्षणेन अन्यादृश इव भवतीत्यहो! धनस्य माहात्म्यम्।

[ कोशः ] 'आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च' इत्यमरः।

[ भाषाटीका ] मनुष्य की धन रहते हुए जो २इन्द्रियां थी वे ही कार्यक्षम इन्द्रियां अब भी है, वही नाम है, वही अकुण्ठित बुद्धि है, वही बोलचाल है, परन्तु धन की गर्मी के निकलते ही वही मनुष्य क्षण मात्र में दूसरा सा ही हो जाता है। और उसकी मान-मर्यादा, बड़ाई-चतुराई सब चली जाती है—यह बड़ा आश्चर्य है ॥ ४० ॥

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान्गुणज्ञः।
स एव वक्ता स च दर्शनीयः,
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ४१ ॥

[ अन्वयः ] यस्य वित्तमस्ति स नरः कुलीनः, स पण्डितः, सः श्रुतवान्, गुणज्ञः, स एव वक्ता, स च दर्शनीयः। सर्वे गुणाः काञ्चनमाश्रयन्ति ॥

[ विग्रहः ] गुणान् जानातीति गुणज्ञः।

[ राजलक्ष्मीः ] यस्य=पुंसः समीपे। वित्तं=धनम्। अस्ति=वर्त्तते। सः=स एव। नरः=पुमान्। कुलीनः=सत्कुलोत्पन्नः। सः=स एव। पण्डितः=विद्वान्। सः=स एव। श्रुतवान्=वेद-

शास्त्रसम्पन्नः। गुणज्ञः=स एव गुणग्राही। गुणवित्। स एव वक्ता=प्रवचनपटुः। स च=स एव च। दर्शनीयः=प्रेक्षणीयः। सुन्दरः। भवतीति शेषः। [ यतः ] सर्वे=सकलाः। गुणाः=। गुणज्ञत्वकुलीनत्वादयो गुणाः। काञ्चनं=सुवर्णम्। धनमिति यावत्। आश्रयन्ति=भजन्ते। उपजाति वृत्तम्।

[ भावार्थः ] यस्य सविधे धनं स एव लोके सकलगुणवान्।

[ भाषाटीका ] आजकल जिसके पास धन है—वही कुलीन है, वही विद्वान् है, वही वेदशास्त्रज्ञ है, वही गुणज्ञ–भावुक–है, वही वक्ता है, वही सुन्दर है। क्योंकि सुवर्ण ( धन ) में सभी गुणों का निवास है ॥ ४१ ॥

**दौर्मन्त्र्यान्नृपतिर्विनश्यति, यतिःसङ्गात्सुतो लालना-**
**द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात्।**
**ह्रीर्मद्यादनवेक्षणादपि कृषिः, स्नेहः प्रवासाश्रया-**
**न्मैत्रीचाऽप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ४२ ॥**

[ अन्वयः ] नृपतिः दौर्मन्त्र्यात् विनश्यति, यतिः सङ्गात्, सुतो लालनात्, विप्रः अनध्ययनात्, कुलं कुतनयात्, शीलं खलोपासनात्, ह्रीः मद्यात्, कृषिः अपि अनवेक्षणात्, स्नेहः प्रवासाश्रयात्, मैत्री च-अप्रणयात्, समृद्धिः अनयात्, धनं त्यागात् प्रमादात् ( च विनश्यति ) ॥

[ विग्रहः ] दुष्टो मन्त्रो यस्यासौ दुर्मन्त्रः। दुर्मन्त्रस्य भावो दौर्मन्त्र्यम्। दुर्मन्त्रिणो भावो वा दौर्मन्त्र्यम्। न अध्ययनम्–अनध्ययनं, तस्मात्। खलस्योपासनं खलोपासनं तस्मात्। प्रवासस्याश्रयः प्रवासाश्रयः, तस्मात् प्रवासाश्रयात्। न प्रणयः अप्रणयः, तस्मात्। न नयः–अनयः, तस्मात्।

[ राजलक्ष्मीः ] नृपतिः=राजा। दौर्मन्त्र्यात्=दुष्टमन्त्रत्वात्। विनश्यति=नष्टो भवति। क्षीयते। यतिः=संन्यासी। सङ्गात्=विषयाद्यासक्तेः। स्त्री–लोक–सम्पर्कात्। 'विनश्यती'ति शेषः। सुतः=पुत्रः। लालनात्=उपलालनात्। वात्सल्यात्। स्नेहप्रदर्शनात्। [ विनश्यति ]। विप्रः=

ब्राह्मणः । अनध्ययनात्=अपठनात् । अस्वाध्यायात् । विनश्यतीत्यनुषञ्जनीयम् । कुलं=वंशः । कुत्सितः तनयः कुतनयः, तस्मात्—कुतनयात्=कुपुत्रात् । विनश्यतीति शेषः। शीलं=सदाचारः । सद्वृत्तम् । खलोपासनात्=दुष्टसेवनात् । दुर्जनसंसर्गात् । [ विनश्यति ] । ह्रीः= लज्जा । मद्यात्=मद्यपानात् । [ विनश्यति ] । कृषिरपि=क्षेत्रकर्षणमपि । अनवेक्षणात्=अनिरीक्षणात् । अपालनात् । [ विनश्यति ] । स्नेहः= प्रीतिः । प्रवासाश्रयात्=प्रदेशगमनात् । [ विनश्यति ] । मैत्री=स्नेहः । मित्रता । अप्रणयात्=अस्नेहात् । अविश्वासात् । [ विनश्यति ] । समृद्धिः=सम्पत्तिः । अनयात्=अविनयात् । [ विनश्यति ] । धनं= द्रविणम् । द्रव्यञ्च । त्यागात्=अतिदानात् । प्रमादात्=अनवधानत्वात् । अविवेकात् । अविचारात् । विनश्यतीत्यस्यानुषङ्गः । शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥

[ कोशः ] 'प्रणयास्त्वमी । विश्रम्भयाञ्चाप्रेमाणः' इत्यमरः ।

[ भाषाटीका ] राजा—अनुचित मन्त्रणा से नष्ट होता है, यति—( सन्यासी साधु ) सङ्ग ( स्त्री आदि की सङ्गति ) से, पुत्र—लाडप्यार से, ब्राह्मण—नहीं पढ़ने से, कुल—दुष्ट पुत्र से, सदाचार ( अच्छी चाल चलन ) दुष्टों के संसर्ग से, लज्जा—मदिरा पीने से, खेती-न सम्हालने से, स्नेह—ज्यादा परदेश में रहने से, मित्रता—विना प्रेम या विना विश्वास से, सम्पत्ति—अविनय ( उद्दण्डता ) से, धन-अति दान से, व प्रमाद ( असावधानी, कुमार्ग गमन आदि ) से, नष्ट होता है ॥ ४२ ॥

**दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।**
**यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥४३॥**

[ अन्वयः ] वित्तस्य—दानं भोगो नाशः [ इत्येवं ] तिस्रः गतयः भवन्ति । यो न ददाति न च भुङ्क्ते तस्य तृतीया गतिः भवति ।

[ राजलक्ष्मीः ] वित्तस्य=धनस्य । दानं=त्यागः । भोगः= उपभोगः । नाशः=विनाशः । अग्निचौरराजादिभिः विनाशः ।

[इत्येवं] तिस्रः-त्रित्वसंख्याकाः । गतयः=प्रकाराः । भवन्ति=जायन्ते । यः=यो नरः न ददाति = धनं सत्पात्रे न ददाति । न भुङ्क्ते= धनं नोपभुङ्क्ते । न सेवते । उपभोगे न विनियुङ्क्ते । तस्य=तदीय-धनस्य । तृतीया=विनाशरूपा तृतीया । गतिः=परिणतिः । अवस्था । भवति=जायते ।

[भावार्थः] धनस्य दानमुपभोगो नाशश्च त्रिधा गतिर्भवति, यो नरो न ददाति न चोपभुङ्क्ते तस्य धनं चौरराजादिभिरेव ह्रियते ।

[भाषाटीका] धन की तीन दशा होती है. (१) दान व पुण्य में लगना, (२) भोग में (खाने पीने पहिरने में) खर्च होना, (३) चोर, राजा या अग्नि से नष्ट होना । जो व्यक्ति धन को न तो देता है और न उपभोग करता है उसके धन की तीसरी ही गति होती है । अर्थात् वह धन योंही नष्ट हो जाता है ॥४३॥

**मणिः शाणोल्लीढः, समरविजयी [1]हेतिदलितो,**
**[2]मदक्षीणो नागः, शरदि सरितः श्यानपुलिनाः ।**
**कलाशेषश्चन्द्रः, सुरतमृदिता बालवनिता,**
**तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥ ४४ ॥**

[अन्वयः] शाणोल्लीढः मणिः, हेतिदलितः समरविजयी, मदक्षीणो नागः शरदि श्यानपुलिनाः सरितः, कलाशेषश्चन्द्रः, सुरतमृदिता बालवनिता, अर्थिषु गलितविभवा जनाः च [एते] तनिम्ना शोभन्ते ॥

[विग्रहः] शाणेन उल्लीढः–शाणोल्लीढः । समरे विजयी–समरविजयी । हेतिभिर्दलितः–हेतिदलितः । मदेन क्षीणः–मदक्षीणः । श्यानं पुलिनं यासान्ताः श्यानपुलिनाः । कलयाशेषः–कलाशेषः । सुरतेमृदिता सुरतमृदिता । बाला चासौ वनिता च बालवनिता । गलिता विभवा येषान्ते गलितविभवाः । तनोर्भावः तनिमा, तेन तनिम्ना ।

१ 'निहतो' पा० । २ 'मदक्षीव' इति केनाऽपि कल्पितः पाठस्तु न युक्तः, 'मणिः शाणोल्लीढः समरविजयी हेतिदलित'इत्यनेनोपक्रान्तस्य क्षयस्य भङ्गापत्तेः ।

[राजलक्ष्मीः] शाणोल्लीढः=भ्रमरपाषाणोल्लिखितः। रत्नघर्षणभ्रमरकयन्त्रसन्तष्टः। मणिः = रत्नखण्डः। हेतिदलितः=शस्त्राहतः। शस्त्राऽस्त्रविदलिताखिलाङ्गः। समरविजयी=युद्धविजयी शूरः। मदक्षीणः = दानप्रवाहपरिक्षीणः। नागः = गजः। शरदि = शरदृतौ। श्यानपुलिनाः = शुष्कतटाः। शुष्कजलोत्थतटाः। सरितः = नद्यः। कलाशेषः = कलामात्रावशिष्टः। एककलात्मकः। चन्द्रः = चन्द्रमाः। सुरतमृदिता = रतिमर्दिता। व्यवायखण्डिता। बालवनिता = षोडशी कामिनी। अर्थिषु = याचकेषु। गलितविभवाश्च = व्यपगतसम्पदश्च। दानव्ययीभूतद्रविणसम्पदश्च। जनाः = राजानः, श्रेष्ठिनश्च।—(एते-) तन्निना = कार्श्येन। कृशतयैव। शोभन्ते = शोभां पुष्णन्ति। शिखरणी वृत्तम्॥ ४४॥

[भावार्थः] मण्यादमः इमे शाणादिर्घर्षिता अपि प्रकटितप्रतापा अतितरां शोभन्ते।

[कोशः] 'शाणस्तु निकषः कषः' इत्यमरः 'तोयोत्थितं तत्पुलिनम्' इत्यमरः। रवेरर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः' इत्यमरः।

[भाषाटीका] सान पर रखकर तरासा गया रत्न, युद्धमें चोट खाया हुआ विजयी युद्धवीर, मद से क्षीण हाथी, शरदृतु में जल के सूख जाने से कम चौड़े पाट हैं जिनके ऐसी नदियां, कलामात्र शेष द्वितीया का चन्द्रमा, सुरत में मर्दित हुई नई नवेली युवती स्त्री, याचकों को देने से जिनका धन कम हो गया है ऐसे दाता गण, ये सब कृशता (कमी) से ही शोभा को प्राप्त होते हैं॥ ४४॥

परिक्षीणः कश्चित्स्पृहयति यवानांप्रसृतये,
स पश्चात्सम्पूर्णः [1]कलयति धरित्रीं तृणसमाम्।
अतश्चानैकान्त्यादगुरुलघुतयाऽर्थेषु धनिना-
मवस्था वस्तूनि प्रथयति च सङ्कोचयति च॥ ४५॥

१ 'गणयति'।

[ अन्वयः ] कश्चित् परिक्षीणः यवानां प्रसृतये स्पृहयति, सः एव पश्चात् सम्पूर्णः सन् धरित्रीं तृणसमां कलयति। अतश्च अर्थेषु अनैकान्त्यात्, धनिनाम् गुरुलघुतया [ धनिनाम् ] अवस्था वस्तूनि प्रथयति च, संकोचयति च ।।

[ विग्रहः ] तृणेन समा तृणसमा, ताम्। एकान्तस्य भावः ऐकान्त्यम्, न ऐकान्त्यम्—अनैकान्त्यम्। तस्मात् अनैकान्त्यात्।

[ राजलक्ष्मीः ] कश्चित्=कोऽपि पुमान्। परिक्षीणः=कृशः। दरिद्रः सन्। यवानां=तीक्ष्णशूकयवाख्यधान्यानाम्। प्रसृतये=चुलुकाय। अञ्जलयेऽपि। स्पृहयति=तमपि इच्छति। अञ्जलिमात्रमपि सस्पृहमिच्छति। सः = स एव पुमान्। पश्चात्=तदनन्तरं। कियतापि कालेन दैवात्। सम्पूर्णः=समृद्धः सन्। धरित्रीं=वसुसम्पूर्णां विस्तृतां पृथ्वीमपि। तृणसमां=तृणतुल्याम्। तृणवत्तुच्छाम्। कलयति = गणयति। मन्यते। पश्यति। अतश्च=अत एव च। अर्थेषु=वस्तुषु। अनैकान्त्यात्=व्यभिचरितत्वात्। अनियतत्वात्। धनिनां=धनवताम्। गुरुलघुतया=गौरवलाघवेन। धनिनां क्षीणत्वेन पूर्णत्वेन च हेतुना। अवस्था—धनिनां दशैव। वस्तूनि = अर्थान्। प्रथयति च=विस्तारयति च। सङ्कोचयति च=अल्पीकरोति च। 'शिखरिणी वृत्तम्'। अस्य श्लोकस्य अर्थे बहुभिर्बहुधा स्ववैदुष्यमाविष्कृतम्। तत्र केषामर्थो युक्त इति भावुका एव भावयन्तु।

[ भावार्थः ] किमपि वस्तु वस्तुतो न स्वल्पं नापि विपुलम्। किन्तु वस्तुनो गौरवलाघवयोर्धनिनां गौरवलाघवे हेतू। यतः कस्यचन यवप्रसृतिरपि दुर्लभा, कस्यचन सकलाऽपि धरित्री स्वल्पैव भासते।

[कोशः] 'पाणिर्निकुब्जः प्रसृतिः' इत्यमरः। 'शितशूकयवौ समौ' इत्यमरः।

[ भाषाटीका ] मनुष्य जब दरिद्र रहता है तो एक मुट्ठी जौ के लिए भी तरसता है, और वही जब दैववश धनी हो जाता है तो सम्पूर्ण पृथ्वी को भी

तिनके की तरह तुच्छ समझने लगता है। अतः कोई भी वस्तु स्वभाव से थोड़ी या ज्यादा नहीं है, किन्तु धनी मनुष्य की अवस्था (दरिद्रावस्था व समृद्धावस्था) ही वस्तु को कम-ज्यादा बड़ी व छोटी करती है। क्योंकि किसी के लिये जौ की मुट्ठी भी भारी है किसी के लिए सम्पूर्ण पृथ्वी भी थोड़ी ही है ॥ ४५ ॥

**राजन् ! दुधुक्षसि यदि क्षितिधेनुमेनां[1]**
**तेनाद्य वत्समिव लोकममुं पुषाण ।**
**तस्मिंश्च सम्यगनिशं परिपोष्यमाणे**
**नानाफलैः फलति कल्पलतेव भूमिः ॥ ४६ ॥**

[ अन्वयः ] राजन् ! यदि एनां क्षितिधेनुं दुधुक्षसि, तेन अद्य वत्समिव अमुं लोकं पुषाण। तस्मिंश्च सम्यगनिशं परिपोष्यमाणे सति भूमिः कल्पलता इव नानाफलैः फलति।

[ विग्रहः ] दोग्धुमिच्छसि दुधुक्षसि। क्षितिः धेनुरिव क्षितिधेनुः। ताम्।

[ राजलक्ष्मीः ] राजन्=हे नृप !। यदि=चेत्। एनां=सकलभूतधात्रीम्। क्षितिधेनुं=गोतुल्यां पृथ्वीम्। दुधुक्षसि=दोग्धुमिच्छसि। तेन=तर्हि। अद्य=अस्मिन् समये। इदानीम्। वत्समिव=तर्णकमिव। अमुम्=इमम्। लोकं=प्रजाम्। पुषाण=परिपालय। परिवर्द्धय। तस्मिंश्च=अमुष्मिँल्लोके च। सम्यक्=यथावत्। अनिशं=सन्ततम्। परिपोष्यमाणे=परिपाल्यमाने। भूमिः=क्षितिधेनुः। कल्पलतेव= कल्पवल्लीव। नानाफलैः=नैकविधैः सस्यादिफलैः। फलति=सफलतां भजते। फलवती परिवर्द्धते। 'वसन्ततिलका वृत्तम्'।

[ भावार्थः ] यो राजा पृथिव्याः सकलां सम्पदं भोक्तुमिच्छेत्तेन प्रजावर्गस्य यथावत्पालनं कर्तव्यम्।

[ कोशः ] 'लोकस्तु भुवने जने' इत्यमरः। 'क्षोणी ज्या काश्यपी क्षितिः' इत्यमरः।

१ 'एताम्'।

[ भाषाटीका ] हे राजन् ! यदि आप इस पृथ्वीरूपी गौ को दूहना ( इससे धन धान्य सम्पत्ति लेना ) चाहते हों तो प्रजारूपी बछडे का खूब परिपालन व पोषण करिए । क्योंकि जब यह प्रजारूपी बछड़ा अच्छी तरह से परिपुष्ट होता है तभी यह पृथ्वीरूपी गौ कामधेनु की तरह नाना प्रकार के फलों ( धन धान्य ) को स्वयं देती है ॥ ४६ ॥

सत्याऽनृता च परुषा प्रियवादिनी च
　हिंस्रा दयालुरपि चाऽर्थपरा वदान्या ।
नित्यव्यया प्रचुरनित्यधनागमा च
　वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ४७ ॥

[ अन्वयः ] सत्या अनृता च, परुषा प्रियवादिनी च, हिंस्रा दयालुरपि च, अर्थपरा वदान्या, नित्यव्यया प्रचुरनित्यधनागमा च । नृपनीतिः वाराङ्गनेव अनेकरूपा [ भवति ] ॥

[ विग्रहः ] प्रियं वदति तच्छीला प्रियवादिनी । अर्थे परा अर्थपरा । नित्यं व्ययो यस्यां सा नित्यव्यया । प्रचुरो नित्यश्च धनागमो यस्यां सा-प्रचुरनित्यधनागमा । नृपस्य नीतिः नृपनीतिः । अनेकं रूपं यस्याः सा अनेकरूपा ।

[ राजलक्ष्मीः ] सत्या =सत्यपरा । अनृता च = मिथ्याप्रपञ्चघटिता । कूटकपटकुटिला च । परुषा = कठोरा । कठोरभाषणान्विता । क्रूरा । रूक्षा । प्रियवादिनी च=प्रियभाषणघटिता च । हिंस्रा=हिंसापरा । दयालुरपि च = दयापराऽपि च । अर्थपरा=धनासक्ता । द्रविणपरायणा । बद्धमुष्टिरिति यावत् । वदान्या = दानशौण्डा (च) । नित्यव्यया = अजस्रव्ययपरा । व्ययबहुला । प्रचुरनित्यधनागमा च = विपुलनित्यधनलाभा च ! ( इत्थं-) नृपनीतिः = राजनीतिः । वाराङ्गनेव = वेश्येव । अनेकरूपा = नानारूपा । बहुरूपा । वाराङ्गनाऽपि-यथायथं काले सत्यभाषणपराऽनृता च भवति, परुषा प्रियवादिनी च

भवति। हिंस्राऽपिदयालुरपि च भवति । धर्मप्रसक्ता दर्शितवदान्य-भावा च भवति । नित्यव्यया प्रचुरधनप्राप्तिरपि भवतीति योज्यम्[1] ।

[ भावार्थः ] राज्ञा क्वचित्परुषेण, क्वचित्प्रियभाषिणा च, सत्यपरेण मिथ्याप्रपञ्चचतुरेण च भाव्यम् । 'वसन्ततिलका वृत्तम्' ।

[ कोशः ] 'निष्ठुरं परुषं ग्राम्यमश्लीलम्' इत्यमरः । 'स्युर्वदान्यस्थूललक्ष्य-दानशौण्डा बहुप्रदे' इत्यमरः ।

[ भाषाटीका ] राजा की नीति वेश्या की तरह—कभी सच्ची, कभी झूठी । कभी कठोर, कभी प्रियभाषणपरायण। किसी समय हिंसापरायण, कभी दयालु । कभी रुपयों के लिए अत्यन्त उत्सुक ( महाकंजूस ), कभी उदार । एवं खूब खर्च करने वाली, तथा जिसमें सदा धन की आमदनी होती है ऐसी होती है । अर्थात् राजा की नीति बहुरूपिए की भाँति समय पर नाना रूप बदलती है ॥ ४७ ॥

आज्ञा कीर्तिः पालनं ब्राह्मणानां
दानं भोगो मित्रसंरक्षणं च ।
येषामेते षड्गुणा न प्रवृत्ताः
कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ४८ ॥

[ अन्वयः ] आज्ञा, कीर्तिः, ब्राह्मणानां पालनं, दानं, भोगः, मित्रसंरक्षणं च, एते षड्गुणाः येषां न प्रवृत्तास्तेषां पार्थिवोपाश्रयेण कोऽर्थः ! ।

[ विग्रहः ] मित्राणां संरक्षणं मित्रसंरक्षणम् । पार्थिवानामुपाश्रयः पार्थिवोपाश्रयः, तेन पार्थिवोपाश्रयेण ।

[ राजलक्ष्मीः ] आज्ञा=शासनम् कीर्त्तिः=यशः । ब्राह्मणानां=विप्राणाम् । पालनं=संरक्षणम् । दानं=पात्रे विसर्जनम् । भोगः=उपभोगः । मित्रसंरक्षणञ्च=सुहृत्पालनं च । एते=इमे । षट्=सङ्ख्याकाः । गुणाः=कीर्त्तिलाभादयो गुणाः । येषां=येषां पुंसाम् । राजाश्रितानां महाकव्यादीनाम् । न प्रवृत्ताः=न जाताः । तेषां=तेषांपुंसाम् ।

१ अत्र केषाञ्चिदन्यथाव्याख्यानञ्च मसृणमातुलानीकल्लोलविलसितमेव ।

पार्थिवोपाश्रयेण = राजसेवया । राजाश्रयलाभेन । कोऽर्थः = किं प्रयोजनम् ? । शालिनीवृत्तम् । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणम् ।

[ भावार्थः ] राजसेवाया मित्रादिरक्षणप्रभृतयः षडेव गुणाः ।

[ कोशः ] 'यशः कीर्तिः समज्ञा च' इत्यमरः ।

[ भाषाटीका ] आज्ञा ( हुकूमत ), कीर्ति, ब्राह्मणों का पालन, दान, उपभोग, मित्रों की रक्षा—ये छै गुण यदि नहीं हुए तो राजा की सेवा ( नौकरी )से क्या लाभ है ? ॥ ४८ ॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ [1]ततो नाधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥४९॥

[ अन्वयः ] धात्रा निजभालपट्टलिखितं स्तोकं महद्वा यत् धनं तत् मरुस्थलेऽपि नितरां प्राप्नोति, ततोधिकं मेरौ [ अपि ] न [ प्राप्नोति ] । तद्धीरो भव, वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः, पश्य, घटः कूपे पयोनिधावपि तुल्यं जलं गृह्णाति ।

[विग्रहः] भालमेव पट्टं भालपट्टम् । भालं पट्टमिव भालपट्ट मिति वा निजस्य भालपट्टं निजभालपट्टं । तत्र लिखितं–निजभालपट्टलिखितम् । वित्तमस्त्येषां वित्तवन्तः, तेषु वित्तवत्सु ।

[ राजलक्ष्मीः ] धात्रा=ब्रह्मणा । विश्वसृजा । निजभालपट्टलिखितं= स्वललाटपट्टोट्टङ्कितम् । स्वकीयभालप्रदेशलिखितम् । स्तोकं=स्वल्पम् । महद्वा = विपुलं वा । अधिकं वा । यत् धनं = यद्वित्तम् । तत् = तद्धनम् । ( लोकः– ) मरुस्थलेऽपि = मरुप्रदेशेऽपि । कान्तारेऽपि । नितराम् = अतिशयेन । सर्वथा । अवश्यम् । प्रप्नोति = लभते । मेरौ = रत्नसानौ हेमाद्रौ च । ततः = भालपट्टलिखितात् । अधिकं = समधिकम् न = न

१ 'मेरौ च नातोऽधिकम्' पा० ।

प्राप्नोति । तत् = तस्मात्कारणात् । धीरः = धैर्यवान् । गम्भीरः । भव = एधि । वित्तावत्सु = धनदुर्मदान्धेषु धनिषु च । कृपणां = दीनाम् । वृत्तिं = चित्तवृत्तिम् । वृथा = निरर्थकम् । मुधैव मा कृथाः = मा कार्षीः । पश्य = विलोकय । विचारय । घटः = कलशः । कूपे = अन्धौ । पयोनिधावपि = समुद्रेऽपि च । तुल्यं = तुल्यप्रमाणमेव । जलं = सलिलम् । गृह्णाति = आदत्ते । शार्दूलविक्रीडितं वृत्तम् ।

[ भावार्थः ] यद्धात्रा भाग्ये लिखितं ततोऽधिकं कथमपि लब्धुं न शक्यतेऽतो दैन्यं मा कार्षीः । धैर्यं बधान ।

[ कोशः ] 'भालं तेजोललाटयोः' इति मेदिनी । 'धाताऽब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः' इत्यमरः । 'पुंस्येवाऽन्धुः प्रहिः कूपः' इत्यमरः । 'समानौ मरुधन्वानौ' इत्यमरः ।

[ भाषाटीका ] ब्रह्माजी ( विधाता ) अपने २ भाग्य में जो थोड़ा या बहुत धन लिख दिया है उसे मनुष्य मरुस्थल में ( जङ्गल में ) भी बैठा रहे तो भी प्राप्त करता है और सुमेरु पर्वत—जो कि सोने व रत्नों से ही बना हुआ है—पर भी उससे अधिक नहीं पा सकता है । अतः धैर्य धारण करो, और धनियों के आगे वृथा दीनता प्रगट न करो । देखो—घड़ा चाहे कूप में भरिए चाहे समुद्र में बराबर ही जल लेता है, अधिक नहीं । अतः भाग्यानुसार ही धन मिलता है, धन के लिए इधर उधर दौड़ना व घबड़ाना वृथा है ॥ ४९ ॥

**त्वमेव चातकाधारोऽसीति केषां न गोचरः ।**
**किमम्भोदवराऽस्माकं कार्पण्योक्तिं प्रतीक्षसे ? ॥५० ॥**

[ अन्वयः ] 'अम्भोदवर ! त्वमेव चातकाधारोऽसि' इति केषां न गोचरः ?। ( अतः ) अस्माकं कार्पण्योक्तिं किं प्रतीक्षसे ? ।

[ विग्रहः ] चातकस्य आधारः—चातकाधारः । अम्भोदेषु वरः—अम्भोदवरः । तत्सम्बुद्धौ—हे अम्भोदवर । कार्पण्येन उक्तिः कार्पण्योक्तिः, ताम् कार्पण्योक्तिम् ।

[ राजलक्ष्मीः ] हे अम्भोदवर = हे मेघवर । त्वमेव = भवानेव । चातकाधारोऽसि = सारङ्गाधारभूतोऽसि । चातकाश्रयोऽसि । इति = इत्येवम् । केषां न गोचरः = केषां न ज्ञातम् । कैर्याभवान्न ज्ञायते इति वा । ( तत्– ) अस्माकं=दीनानां चातकानामस्माकम् । कार्पण्योक्तम् = देहीति दैन्योक्तिम् । कृपणताप्रवृत्तां वाचम् । किं = किमिति । प्रतीक्षसे = प्रतिपालयसि श्रोतुमिच्छसि ? । शीघ्रं दयस्व ।

[ भावार्थः ] हे मेघवर ! त्वमेव चातकानामस्माकमाधारभूतोऽसि । तद्दयस्व क्षिप्रम् । देहि जलम् । किमिति खल्वस्माकं दैन्यविक्लवां याञ्चावाचं श्रोतुं प्रतीक्षमाणस्तिष्ठसि ? । विलम्बं मा कार्षीः ।

[ कोशः ] 'अथ सारङ्गः स्तोककश्चातकः समाः' इत्यमरः ।

[ भाषाटीका ] हे मेघों में श्रेष्ठ ! आपही हम चातकों के आधार हैं-यह संसार में सब जानते ही हैं । तो हमारी दीन आर्त्त वाणी सुनने की प्रतीक्षा ( बाट ) आप क्यों देखते हैं ? शीघ्र ही जल बरसा कर हमारी तृषा को क्यों नहीं दूर कर देते ? ॥ ५० ॥

रेरे चातक ! सावधानमनसा मित्र ! क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति[1] गगने सर्वेऽपि नैतादृशाः[2] ।
केचिद्वृष्टिभिरार्द्रयन्ति धरणीं[3] गर्जन्ति केचिद्वृथा,
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥५१॥

( अन्वयः ) रे रे चातक ! मित्र ! ( त्वया ) सावधानमनसा क्षणं श्रूयतां, गगने बहवोऽम्भोदा वसन्ति ( किन्तु ) सर्वेपि एतादृशाः न ( सन्ति । यतः ) केचित् वृष्टिभिः धरणीम् आर्द्रयन्ति, केचित् च वृथा गर्जन्ति । [ अतः ] यं यं पश्यसि तस्य तस्य पुरतो दीनं वचो मा ब्रूहि ।

[ विग्रहः ] अवधानेन सहितं सावधानं, सावधानं च तन्मनश्च, सावधानमनः, तेन सावधानमनसा । अम्भो ददतीत्यम्भोदाः ।

[ राजलक्ष्मीः ] रे रे चातक = अरे सारङ्ग । मित्र = सखे । साव-

१ 'बहवो हि सन्ति' ।   २ 'नैतादृशः'   ३ 'वसुधां' ।

थानमनसा = सावहितेन चेतसा त्वया। क्षणं = किञ्चित्कालं यावत्। स्वल्पं कालं यावत्। श्रूयताम् = आकर्ण्यताम्। गगने = आकाशे। नभोवीथ्याम्। गगनाङ्गणे। बहवः = अनेके। अम्भोदाः = मेघाः। वसन्ति = निवसन्ति। किन्तु सर्वेऽपि = सकला अपि एतादृशान् = ईदृशा जलप्रदा दयालुमूर्धन्या न सन्ति। [ तथाहि ] केचित् = केऽपि मेघाः। धरणीं = वसुधाम्। वृष्टिभिः - वर्षैः। आर्द्रयन्ति = क्लेदयन्ति। सजलां कुर्वन्ति। केचित् = केचित्तु। वृथा = वृथैव। निरर्थकमेव। गर्जन्ति = शब्दायन्ते। ( अतः = ) यं यं पश्यसि = यं यं मेघं गगने प्रेक्षसे। तस्य तस्य पुरतः = तस्य तस्य मेघस्य पुरतः। दीनं वचः = देहि देहीति कृपणं वचनम्। मा ब्रूहि = मा वोचः। मा वद। शार्दूलविक्रीडितं वृत्तम्।

[ भावार्थः ] मानिना पुरुषेण सर्वेषां पुरतः स्वदैन्यं न दर्शनीयं, नहि सर्वे दातारः। नहि सर्वेजलदा वर्षन्त्येव।

[ कोशः ] 'अथ सारङ्गः, स्तोककश्चातकः समाः' इत्यमरः। 'अथ मित्रं सखा सुहृत्' इत्यमरः।

[ भाषाटीका ] अरे चातक ! मित्र ! थोड़ा सावधान होकर सुन। आकाश में बहुत प्रकार के मेघ रहते हैं, कोई तो वृष्टि से पृथिवी को तर कर देते हैं, और कोई २ खाली गर्जते ही हैं, देने लेने को कुछ नहीं। अतः जिस किसी मेघ के सामने दीन वचन मत कहा करो। समझ बूझकर माँगा करो ॥ ५१ ॥

दुर्जनलक्षणं निर्दिशति—

**अकरुणत्वमकारणविग्रहः**
**परधने परयोषिति च स्पृहा।**
**सुजनबन्धुजनेष्वसहिष्णुता**
**प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ ५२ ॥**

[ अन्वयः ] अकरुणत्वम् अकारणविग्रहः परधने परयोषिति च स्पृहा। सुजनबन्धुजनेषु असहिष्णुता। दुरात्मनाम् इदं प्रकृतिसिद्धम् ( अस्ति )।

( विग्रहः ) नास्ति करुणा यस्यासो अकरुणः, तस्य भावः अकरुणत्वम् । अकारणं यथा स्यात्तथा विग्रहः–अकारणविग्रहः । यद्वा–नास्ति कारणं यस्यासौ अकारणः, अकारणश्चासौ विग्रहश्चेति अकारणविग्रहः । परस्य परेषां वा धनं, परधनं, तस्मिन् परधने । परस्य परेषां वा योषित्, परयोषित्, तस्यां परयोषिति । सुजनाश्च बन्धुजनाश्च–सुजनबन्धुजनाः, तेषु । न सहिष्णुता असहिष्णुता । प्रकृत्या सिद्धं प्रकृतिसिद्धम् । दुष्ट आत्मा येषान्ते दुरात्मानः, तेषां—दुरात्मनाम् ।

[ राजलक्ष्मीः ] अकरुणत्वं = निर्दयत्वम् । निष्कृपत्वम् । अकारणविग्रहः = निष्प्रयोजनं कलहः । परधने = अन्यसम्पत्तौ च । इतरद्रव्ये च । परयोषिति च = परदारेषु च । स्पृहा = इच्छा । सुजनबन्धुजनेषु = सज्जनबान्धवलोकेषु । असहिष्णुता = असहनशीलता । अक्षमा । हि = निश्चयेन । इदम् = एतत्सर्वम् । दुरात्मनां = खलानाम् । दुष्टात्मनाम् । प्रकृतिसिद्धं = स्वभावसंसिद्धम् । नैसर्गिकम् । भवतीति शेषः । द्रुतविलम्बितं वृत्तम् ।

( भावार्थः ) खलाः स्वभावत एव क्रूराशयाः कलहपराः परधन–परदारलम्पटाः, सज्जनस्वजनेष्वीर्ष्यापराश्च भवन्ति ।

( कोशः ) 'कारुण्यं करुणा घृणा' इत्यमरः । 'इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः' इत्यमरः ।

[ भाषाटीका ] निर्दयता, विना प्रयोजन लडाई करना, परधन व परस्त्री पर मन चलाना, सज्जनों व बन्धु बान्धवों से द्वेष रखना, यह सब दुष्टों का सहज स्वभाव है ॥ ५२ ॥

**दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि[1] सन् ।**
**मणिना भूषितः[2] सर्पः किमसौ न भयङ्करः ॥ ५३ ॥**

( अन्वयः ) दुर्जनः विद्यया अलङ्कृतोऽपि सन् परिहर्तव्यः । मणिना भूषितः सर्पः असौ किम् न भयङ्करः ! ।

---

१ 'भूषितो' । २ 'दलङ्कृतः' ।

( विग्रहः ) भूषा सञ्जाता अस्य भूषितः । भयङ्करोतीति भयङ्करः ।

[ राजलक्ष्मीः ] दुर्जनः = खलः । दुष्टः । विद्यया = शास्त्रादिज्ञानेन । अलङ्कृतोऽपि सन् = भूषितोऽपि सन् । परिहर्त्तव्यः = त्याज्यः । दूरतः परिहरणीय एव । मणिना = रत्नेन । भूषितः = अलंकृतः । सर्पः = भुजङ्गमः । असौ = अयं । किं = किमु । न भयङ्करः = न भयदः । किन्तु भयङ्कर एव ।

( भावार्थः ) दुर्जनो विद्यालङ्कृतोऽपि त्याज्य एव, यतो हि मणियुक्तोऽपि सर्पो भयङ्कर एव भवति ।

( कोशः ) 'सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः' इत्यमरः ।

[ भाषाटीका ] दुर्जन यदि विद्या आदि गुणों से अलंकृत भी हो तो भी उससे डरना चाहिए एवं उससे सम्बन्ध न रखना चाहिए । क्योंकि मणि से युक्त होने पर भी क्या सर्प भयङ्कर नहीं है ? । जरूर भयङ्कर है ॥ ५२ ॥

**जाड्यं ह्रीमति गण्यते, व्रतरुचौ दम्भः, शुचौ कैतवं,**
**शूरे निर्घृणता मुनौ विमतिता, दैन्यं प्रियालापिनि ।**
**तेजस्विन्यवलिप्तता, मुखरता वक्तर्यशक्तिः स्थिरे,**
**तत्को नाम गुणो भवेत्स गुणिना यो दुर्जनैर्नाङ्कितः ॥**

( अन्वयः ) [ दुर्जनैः- ] ह्रीमति जाड्यं गण्यते । व्रतरुचौ दम्भः [ गण्यते ] शुचौ कैतवं, शूरे निर्घृणता, मुनौ विमतिता, प्रियालापिनि दैन्यं, तेजस्विनि अवलिप्तता, वक्तरि मुखरता, स्थिरे अशक्तिः ( गण्यते ) तत् गुणिनां गुणः स को नाम—यो दुर्जनैर्न अङ्कितः भवेत् ? ।

[ विग्रहः ] जडस्य भावो जाड्यम् । ह्रीर्विद्यतेऽस्यह्रीमान्, तस्मिन् ह्रीमति व्रतेषु रुचिर्यस्यासौ व्रतरुचिः, तस्मिन् । कितवस्य भावः कैतवम् । निर्गता घृणा अस्य निर्घृणः, तस्य भावो निर्घृणता । विगता मतिर्यस्यासौ विमतिः, विमतेर्भावः विमतिता । प्रियमालपति तच्छीलः प्रियालापी, तस्मिन् प्रियालापिनि । तेजोऽस्त्यस्य तेजस्वी, तस्मिन् । अवलिप्तस्य भावः अवलिप्तता । मुखरस्य भावो मुखरता

न शक्तिः-अशक्तिः। गुणाः सन्त्येषां ते गुणिनः, तेषाम्। दुष्टा जनाः दुर्जनाः, तैः।

[ राजलक्ष्मीः ] दुष्टैः-ह्रीमति=लज्जाशीले। जाड्यं=जडता। मूर्खता। मन्दता। गण्यते= कथ्यते। मन्यते। व्रतरुचौ=व्रतोपवासादिनियमाभिलाषे। दम्भः=वञ्चकता। आडम्बरः। कपटः। शुचौ= शुद्धाचारे। कैतवं=छलं। शूरे=वीरे। शौर्यशालिनि। निर्घृणता= निर्दयता। मुनौ=वाचंयमे मुमुक्षौ। विमतिता=विगतबुद्धिता। अन्धभक्तिः। प्रियालापिनि=मधुरभाषिणि। प्रियंवदे। दैन्यं=दीनता। कार्पण्यम्। तेजस्विनि=प्रतापिनि। आत्माभिमानवति च। अवलिप्तता=दृप्तता। अभिमानिता गण्यते। वक्तरि=भाषणपटौ। वावदूके। मुखरता=वाचालता। बहुभाषिता। स्थिरे=शान्ते। अचञ्चले। उदासीने। अशक्तिः=शक्तिराहित्यम्। निर्बलता। गण्यते=मन्यते। कथ्यते। तत्=तस्मात्। गुणिनां=लज्जादिगुणवताम्। गुणः-स को नाम=को वै स गुणः यो दुर्जनैः=खलैः। न=नैव। अङ्कितः=कलङ्कितः भवेत्= स्यात्।

[ भावार्थः ] गुणिनां सर्वे लज्जादयो गुणा नीचैर्दोषतया गण्यन्ते।

[कोशः] 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे, इत्यमरः। 'कारुण्यं करुणा घृणा' इत्यमरः। 'कलङ्काऽङ्कौ लाञ्छनं च' इत्यमरः।

[भाषाटीका] दुर्जन लोग—लज्जावाले सज्जन में जड़ता दोष ( कमहिम्मत ) कहते हैं। व्रत उपवास आदि करनेवालों में ढोंग, व पाखण्ड, शुद्धता व स्वच्छता से रहनेवाले में जूवा चोरी, कपट, शूरमें निर्दयता, मुनिमहात्माओं में-मूर्खता व अन्धभक्ति, मीठे बोलने वाले में दीनता, तेजस्वी में घमण्ड, अच्छे बोलने वाले में बकवादीपन, चुप रहनेवाले में-असामर्थ्य, ये दोष बताते हैं। अतः सज्जनोंके ऐसे कौनसे गुण हैं जिन्हें दुष्टलोग कलंकित न करते हों ?॥ ५४॥

**लोभश्चेदगुणेन किं, पिशुनता यद्यस्ति किं पातकैः,**

**सत्यं चेत्तपसा च किं, शुचिमनो यद्यस्ति तीर्थेन किम्।**

**सौजन्यं यदि किं [1]गुणैः, सुमहिमा[2] यद्यस्ति किं मण्डनैः,**
**सद्विद्या यदि किं धनैरपयशो यद्यस्ति किंमृत्युना ॥५५॥**

[ अन्वयः ] लोभश्चेत् ( तदा ) अगुणेन किं, यदि पिशुनता अस्ति ( तदा ) पातकैः किं, सत्यं चेत्तपसा च किं, यदि शुचि मनः, अस्ति (तदा) तीर्थेन किं, यदि सौजन्यम् ( अस्ति तदा ) गुणैः किं यदि महिमा अस्ति ( तर्हि ) मण्डनैः किं, यदि सद्विद्या अस्ति ( तर्हि ) धनैः किम्, यदि अपयशोऽस्ति ( तर्हि ) मृत्युना किम् ? ॥

[ विग्रहः ] न गुणः अगुणः, तेन । पिशुनस्य भावः–पिशुनता । सुजनस्य भावः–सौजन्यम् । सुष्ठु महिमा सुमहिमा । सती विद्या सद्विद्या । अपगतं यशः–अपयशः ।

[ राजलक्ष्मीः ] लोभः = तृष्णा । चेत् = यदि । तदा । अगुणेन = दोषान्तरेण । किं = किं प्रयोजनम् । लोभस्यैव सर्वदोषतुल्यत्वात् । यदि = चेत् । पिशुनता = सूचकता । दुर्जनता । अस्ति = विद्यते । [तदा] पातकैः = पापान्तरैः । किं = किं प्रयोजनम् । तस्या एव सर्वपापमूलकत्वात् । सत्यं = सत्यभाषणम् । सत्यप्रियता च । चेत् = यदि । तर्हि–तपसा च = तपश्चरणेन च । किं = किं प्रयोजनम् । सत्यस्य सर्वतपोरूपत्वात् । यदि–यदा । शुचि = शुद्धम् । मनः = मानसम् । अस्ति = विद्यते । [तदा] तीर्थेन = ऋष्यादिजुष्टेन पुण्याश्रमजलाशयक्षेत्रादिना काश्यादिना च । किं = किं फलम् । तीर्थसेवादिफलस्य शुद्धस्य मानसस्य स्वतः सिद्धत्वात् । यदि-सौजन्यं = सज्जनता । अस्ति तदा । गुणै-ः = दयादाक्षिण्यौदार्यादिभिः । किं = किं प्रयोजनम् । निजैरिति पाठे—निजैः = स्वीयबन्धुबान्धवैः किंप्रोजनं, सौजन्येन सर्वेषामात्मीयतुल्यत्वादित्यर्थः । यदि = चेत् । सुमहिमा = सुप्रतिष्ठा ।

---

१ 'निजैः' । २ 'स्वमहिमा ।

अस्ति=विद्यते ? तर्हि-मण्डनैः=भूषणैः। किं-प्रयोजनं । सुमहिम्नैव भूषणकार्यस्य शोभायाः कृतत्वात्। स्वमहिमेति पाठेआत्मप्रतिष्ठेत्यर्थः यदि–सद्विद्या=शोभना यशस्करी धनकरी च विद्या। अस्ति=वर्त्तते तर्हि–धनैः=द्रविणैः। वित्तर्द्धिविभवैः। किं=किं प्रयोजनम्। यदि=चेत्। अपयशः=अकीर्त्तिः। अस्ति=लोके वर्त्तते । तर्हि मृत्युना=मरणेन। किं=किं करणीयम्। अपयशसो मरणतुल्यत्वात् । शार्दूलविक्रीडितं वृत्तम्॥ ४५ ॥

[कोशः] 'पिशुनो दुर्जनः खलः' इत्यमरः। 'सत्यं तथ्यमृतं सम्यक्' इत्यमरः। 'तपः कृच्छ्रादिकर्म च' इत्यमरः। 'मृत्युर्मरणं निधनोऽस्त्रियाम्' इत्यमरः।

[भाषाटीका] यदि मनुष्य में लोभ है तो और दुर्गुण की क्या आवश्यकता है यदि चुगली करना रूपी दोष है तो अन्य पापों का क्या जरूरत है। यदि सत्य है तो और तपस्याओं का क्या काम है ?। यदि मन शुद्ध हो तो गङ्गा आदि तीर्थों का क्या काम है ?। यदि सज्जनता है तो अन्य गुणों से क्या कार्य है। यदि अच्छी प्रतिष्ठा है तो भूषणों की क्या आवश्यकता है । यदि उत्तम विद्या है तो धन का क्या काम है ?। यदि संसार में अपकीर्त्ति (बदनामी) है तो फिर मृत्यु में क्या भेद है ॥ ५५ ॥

शशी दिवसधूसरो, गलितयौवना[1] कामिनी,
सरो विगतवारिजं, मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः, सततदुर्गतः सज्जनो,
नृपाङ्गणगतः[2] खलो, मनसि सप्त शल्यानि मे ॥ ५६ ॥

[अन्वयः] दिवसधूसरः शशी, गलितयौवना कामिनी, विगतवारिजं सरः, स्वाकृतेः अनक्षरं मुखं धनपरायणः प्रभुः, सततदुर्गतः सज्जनः (एतानि) मे मनसि सप्त शल्यानि [सन्ति] ॥

१ 'विगतयौवना' पा०। २ 'ष्ठग'।

[ विग्रहः ] दिवसेन धूसरः दिवसधूसरः । गलितं यौवनं यस्याः सा गलितयौवना । विगतं वारिजं यस्मात्तत् विगतवारिजम् । न अक्षराणि यस्मिन् तत्-अनक्षरम् । सुष्ठु आकृतिर्यस्यासौ स्वाकृतिः, तस्य स्वाकृतेः । धने—परायणः-तत्परः—धनपरायणः । सततं दुर्गतः—सततदुर्गतः । नृपस्य अङ्गणं नृपाङ्गणम् । नृपाङ्गणं गतः—नृपाङ्गणगतः ।

[ राजलक्ष्मीः ] दिवसधूसरः=दिनमलिनकान्तिः । शशी=चन्द्रः । गलितयौवना=व्यपगततारुण्या च । कामिनी=रमणी । विगतवारिजं=व्यपगतकमलम् । सरः = कासारः । स्वाकृतेः=सुन्दराकृते पुंसः । अनक्षरम् = अक्षरशून्यम् । शुद्धोच्चारणविकलम् । विद्याविकलम् । मुखं=वदनम् । धनपरायणः = धनासक्तः । अर्थपिशाचः । बद्धमुष्टिः । प्रभुः=स्वामी । सततदुर्गतः=निरन्तरं दरिद्रः । सदा विपद्गतः । सज्जनः=सत्पुरुषश्च । किञ्च नृपाङ्गणगतः=राजचत्वरं गतः । राजप्रतीहारं गतः । खलः=दुर्जनश्च । ( एतानि ) सप्त मे=मम । मनसि=चित्ते । शल्यानि=कण्टकानि । शोकशल्यानि । सन्तीति शेषः ।

[ कोशः ] 'वस्रो दिनाऽहनी या तु क्लीवे दिवसवासरौ' इत्यमरः । 'ईषत्पाण्डुस्तु धूसरः' । 'अङ्गणं चत्वराऽजिरे' इत्यमरः । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । 'कासारः सरसी सरः' इत्यमरः ।

[ भाषाटीका ] दिवस के कारण मलिनकान्ति चन्द्र, यौवनरहित कामिनी, ( या ढलती जवानी में कामासक्त स्त्री ), कमल के बिना सरोवर ( झील ), सुन्दर रूप वाले व्यक्ति का शुद्ध उच्चारण रहित मुख, कञ्जूस मालिक, सदा दुःखी व दरिद्र सज्जन, राजदर्बार में प्रविष्ट प्रधानभूत—खल ( दुष्ट ) लोग, ये सात मेरे ( भर्तृहरि के ) मन में, शल्य ['कांटा' 'सेल'] के भाँति खटकते हैं ॥५६॥

**न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।**
**होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥ ५७ ॥**

[ अन्वयः ] चण्डकोपानां भूभुजां कश्चिदात्मीयो नाम न (अस्ति)। पावकः जुह्वानं होतारमपि स्पृष्टः चेत् दहति।

[ विग्रहः ] चण्डः कोपो येषान्ते चण्डकोपः, तेषां चण्डकोपानाम्। भुवं भुञ्जन्ति इति भूभुजः, तेषां भूभुजां।

[ राजलक्ष्मीः ] चण्डकोपानाम् = उग्रकोपानाम्। भूभुजां = राज्ञाम्। कश्चित् = कोऽपि। आत्मीयः = स्वकीयः। नाम इति प्रसिद्धौ। नास्ति = न विद्यते। ( यतः- ) पावकः = वह्निः। होतारमपि = ऋत्विजमपि। जुह्वानं = हवनशीलम्। उपकुर्वन्तमपि। स्पृष्टः = संस्पृष्टश्चेत्। दहति = भस्मीकरोत्येव।

[ भावार्थः ] राज्ञां धनिनाञ्च कोऽपि स्वीयो नास्ति।

[ कोशः ] 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः।

[ भाषाटीका ] अत्यन्त क्रोधी ( जल्दी ही अप्रसन्न होने वाले ) राजा लोगों का कोई भी प्रिय नहीं है। देखो हवन करने वाले होता को भी अग्नि छूते ही जला देता है ॥ ५७ ॥

मौनान्मूकः प्रवचन पटुर्वातुलो जल्पको वा,
धृष्टः पार्श्वे वहति च तदा, दूरतश्चाऽप्रगल्भः।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाऽभिजातः,
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ५८ ॥

[ अन्वयः ] मौनात् मूकः, प्रवचनपटुः वातुलः जल्पको वा, [ यदि ] पार्श्वे वसति च तदा धृष्टः, दूरतश्च अप्रगल्भः, क्षान्त्या भीरुः, यदि न सहते प्रायशो नाभिजातः। ( अतः ) परमगहनः सेवाधर्मः योगिनामप्यगम्यः ( अस्ति )।

[ विग्रहः ] प्रवचने पटुः प्रवचनपटुः। वातं न सहते वातुलः। न प्रगल्भः अप्रगल्भः। सेवैव धर्मः सेवाधर्मः। परमं गहनः परमगहनः। न गम्यः—अगम्यः। न अभिजातः—नाभिजातः। नञा सुप्सुपेति समासः। पृथक्पदद्वयं वा।

[ राजलक्ष्मीः ] मौनात् = अभाषणात् । मूकः = वाक्शक्तिविकलः । प्रवचनपटुः = भाषणकुशलश्चेत् । वातुलः[1] = विक्षिप्तः । वा = अथवा । जल्पको = वाचालः । वृथाभाषी । ( यदि ) पार्श्वे = स्वामिनिकटे । वसति च = तिष्ठति च । तदा = तर्हि । धृष्टः = अविनीतः । दूरतश्चेद्वसति तदा । अप्रगल्भः = अकुशलः । कार्याऽक्षमः । क्षान्त्या = क्षमया । क्षमाशीलश्चेदित्यर्थः । भीरुः = भीरुकः । कातरः । यदि=चेत् । न सहते= न क्षमते तर्हि । प्रायशः = बाहुल्येन । नाऽभिजातः=अकुलीनः । दुष्कुलोत्पन्नः । 'इति लोके भण्यते' इति शेषः । (अतः=अस्मात्कारणात्) । सेवाधर्मः = सेवारूपोधर्मः । सेवेति यावत् । परमगहनः = नितरां गूढः । नितरां कठिनः । योगिनां = योगसमृद्धिशालिनां महात्मनामपि । अगम्यः = अज्ञेयः । अस्ति । मन्दाक्रान्तावृत्तम् ।

[ भावार्थः ] राजादिसेवाऽतिकठिना । कथमपि कर्त्तुमशक्या ।

[ कोशः ] 'अवाचि मूकः' इत्यमरः । 'स्याज्जल्पाकस्तुवाचालो वाचाटो बहुगर्ह्यवाक्' इत्यमरः । 'धृष्टे धृष्णुर्वियातश्च' इत्यमरः । 'वातुलः पुँसि वात्यायामपिवाताऽसहे त्रिषु' इत्यमरः । 'अभिजातः कुलीनेस्यान्न्याय्यपण्डितयोरपि' इति मेदिनी ।

[ भाषाटीका ] नौकर यदि कम बोलता हो ( मौन रहता हो ) तो 'गूँगा' कहा जाता है । बोलने में तेज हो तो वायुप्रधान ( बड़बड़िया ) व ज्यादा बोलनेवाला कहा जाता है । इसी तरह पास में रहें तो धृष्ट ( अशिक्षित ), दूर रहे तो भोंदू , सहन करने वाला हो तो डरपोंक, न सहने वाला अकुलीन कहलाता है । इसलिए सेवाधर्म ( मालिक की नौकरी करना ) बड़ा कठिन है, और योगियों की समझ से भी परे है ।। ५८ ।।

नीचस्य प्राप्यविभवस्य दर्शनमप्यमङ्गलकरमित्याह—

उद्भासिताऽखिलखलस्य विशृङ्खलस्य
[2]प्राग्जातविस्तृतनिजाऽधमकर्मवृत्तेः ।

1 'वातूलः' । 2 प्रागिति भिन्नं पदमिति गौडा मन्यते ।

**दैवादवाप्तविभवस्य गुणद्विषोऽस्य**
**नीचस्य गोचरगतैः सुखमाप्यते[1] कैः ॥ ५६ ॥**

[ अन्वयः ] उद्भासिताऽखिलखलस्य विशृङ्खलस्य प्राग्जातविस्तृतनिजाधमकर्मवृत्तेः दैवात् अवाप्तविभवस्य गुणद्विषः अस्य नीचस्य—गोचरगतैः कैः सुखमाप्यते ।

[ विग्रहः ] उद्भासिताः अखिला खला येनासौ=उद्भासिताखिलखलः, तस्य । विगतं शृंखलं यस्याऽसौ विशृङ्खलः, तस्य विशृङ्खलस्य । प्राक्जातैः विस्तृतैः निजाधमकर्मभिः वृत्तिर्जीविका यस्यासौ प्राग्जात-विस्तृत–निजाऽधमकर्मवृत्तिः, तस्य । ( केचित्तु प्राग्जातं-सम्प्रति-विस्तृतं निजमधमं यत्कर्म तत्र वृत्तिर्यस्येति विग्रह्णन्ति, तन्नैव रोचते विद्वद्भ्यः । अवाप्तो विभवो येनासौ अवाप्तविभवः, तस्य । गुणान्द्वेष्टीति गुणद्विट्, तस्य गुणद्विषः । गोचरं गता गोचरगताः, तैः गोचरगतैः ।

[ राजलक्ष्मीः ] उद्भासिताऽखिलखलस्य=प्रवर्द्धितसकलनीचलोकस्य । दुष्टगणमूर्धन्यस्य । अतएव विशृङ्खलस्य=उद्दण्डस्य । नियन्त्रणरहितस्य । भिन्नमर्यादस्य । स्वतन्त्रस्य । प्राग्जातविस्तृतनिजाऽधमकर्मवृत्तेः=पूर्वावस्थाकृत–लोकप्रसिद्ध–स्वकीयपापकर्मकृतजीविकस्य । सम्प्रति—दैवात्=कुतोऽपि सौभाग्यात् । अवाप्तविभवस्य=सम्प्राप्तसम्पत्तेः । गुणद्विषः=गुणद्वेषिण इति यावत् । नीचस्य=खलस्य । गोचरगतैः=दृष्टिगतैः। नेत्रगोचरतां प्राप्तैः । अनेन दृष्टैरिति यावत् । कैः=के नाम सज्जनैः । सुखम्=शर्म । आप्यते=लभ्यते ? । कैरपि नेत्याशयः । 'आस्यते' इति पाठे स्थीयते इत्यर्थः । वसन्ततिलका वृत्तम् ।

[ कोशः ] 'दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । 'वृत्तिर्वर्त्तनजीवने' इत्यमरः । 'शर्मशातसुखानि च'-इत्यमरः ।

---

१ 'मास्यते कैः' ।

[ भाषाटीका ] जो खल ( दुष्ट ) लोगों में प्रधान व उद्दण्ड है, जिसने अपनी पहिली ( दरिद्र ) अवस्था में बड़े २ भयङ्कर पाप करके उन पापों से ही अपनी जीविका चलाई है पर इस समय भाग्यवश जिसे कहीं से धन प्राप्त हो गया है, और जो स्वभाव से ही गुणद्वेषी व बड़ा ही नीच है ऐसे ( इस ) खल के दृष्टिगोचर में आकर किसने सुख पाया है ? । किसी ने नहीं । अर्थात् दुष्टों के चंगुल में फँस कर सभी कष्ट पाते हैं ॥ ५९ ॥

आरम्भगुर्वी, क्षयिणी क्रमेण,
लघ्वी पुरा, वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ६० ॥

[ अन्वयः ] आरम्भगुर्वी, क्रमेण क्षयिणी, पुरा लघ्वी, पश्चात् वृद्धिमती च-दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव-खलसज्जनानां मैत्री ( भवति ) ।

[ विग्रहः ] आरम्भे गुर्वी आरम्भगुर्वी । क्षयोऽस्त्यस्याः क्षयिणी । वृद्धिरस्त्यस्या वृद्धिमती । पूर्वार्द्धं च परार्द्धं च पूर्वार्द्धपरार्द्धे, पूर्वार्द्धपरार्द्धयोर्भिन्ना । खलाश्च सज्जनाश्च खलसज्जनाः, तेषां खलसज्जनानाम् ।

[ राजलक्ष्मीः ] ( दुष्टानां मैत्री- ) आरम्भगुर्वी—प्रारम्भविस्तृता । आदौ वर्द्धमाना । क्रमेण=क्रमशश्च । कालक्रमेण । क्षयिणी=विनाशिनी । क्षीयमाणा । ( सतां मैत्री तु ) पुरा=आदौ । लघ्वी=स्वल्पा । क्षीणा । पश्चात्=क्रमशश्च । वृद्धिमती च प्रवर्द्धमाना च भवति । दिनस्य=दिवसस्य । पूर्वार्द्धपरार्द्धभिन्ना=पूर्वाह्णपराह्णभेदेन भिन्ना । छायेव=अनातप इव । खलसज्जनानां=दुष्टसत्पुरुषाणाम् । मैत्री=मित्रता । भवति=जायते ।

[ भावार्थः ] खलानां मैत्री आदौ पूर्वाह्ण- ( १२ वादनपर्यन्त ) च्छायेव दीर्घा, पुनः क्रमशश्च क्षीणा भवति । सज्जनानां मैत्री तु पराह्णच्छायेवादौ ह्रस्वा, पश्चाच्च दीर्घा भवति ।

[ कोशः ] 'छाया सूर्यप्रिया कान्तिः प्रतिविम्बमनातपः' इत्यमरः ।

[ भाषाटीका ] दुष्टों की मित्रता सवेरे की छाया की तरह पहिले तो बड़ी ( लम्बी ) होती है, पर धीरे २ कम होती जाती है । परन्तु सज्जनों की मित्रता अपराह्न ( १२ बजे के बाद ) की छाया की तरह पहिले थोड़ी ( छोटी ) होती है, परन्तु पीछे बढ़ने लगती है । ( सवेरे की छाया लम्बी होती है, और वह दोपहर तक कम पड़ जाती है । दोपहर के बाद की छाया पहिले कम रहती है और धीरे २ बढ़ने लगती है ) ॥ ६० ॥

**मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।**
**लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ६१ ॥**

[ अन्वयः ] जगति लुब्धकधीवरपिशुनाः तृणजलसन्तोषविहितवृत्तीनां मृगमीनसज्जनानां निष्कारणवैरिणः [ भवन्ति ] ।

[ विग्रहः ] लुब्धकाश्च धीवराश्च पिशुनाश्च लुब्धकधीवरपिशुनाः । तृणञ्च जलञ्च सन्तोषश्च तृणजलसन्तोषाः, तृणजलसन्तोषैर्विहिता वृत्तयो यैस्ते तृणजलसन्तोषविहितवृतयः, तेषाम् । मृगाश्च मीनाश्च सज्जनाश्च मृगमीनसज्जनाः, तेषाम् मृगमीनसज्जनानाम् ।

[ राजलक्ष्मीः ] जगति = लोके । लुब्धकधीवर पिशुनाः ॥ व्याध-कैवर्त्त-दुर्जनाः । तृणजलसन्तोषविहितवृत्तीनां = घास–वारि–सन्तोष–कृतवर्त्तनानाम् । मृगमीनसज्जनानां = हरिणमत्स्य–सत्पुरुषाणाम् । निष्कारणवैरिणः = निर्हेतुकशत्रवः । [ भवन्ति=जायन्ते ] ।

[ भावार्थः ] व्याधधीवरौ मृगमत्स्यानामिव दुर्जनाः साधूनां निष्कारण-वैरिणो भवन्ति ।

[ कोशः ] 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः । 'कैवर्त्ते दासधीवरौ' इत्यमरः । 'वृत्तिवर्त्तनजीवने' इत्यमरः ।

[ भाषाटीका ] घास खाकर जीनेवाले मृग के, जल से जीनेवाली मछली

के, सन्तोष से निर्वाह करनेवाले सज्जनों के क्रमशः व्याध धीवर और दुर्जन ये बिना कारण वैरी होते हैं ॥ ६१ ॥

**वाञ्छा सज्जनसङ्गमे, परगुणे प्रीतिर्गुरौ नम्रता,**
**विद्यायां व्यसनं, स्वयोषिति रतिर्लोकापवादाद्भयम् ।**
**भक्तिः शूलिनि, शक्तिरात्मदमने, संसर्गमुक्तिःखले,**
**येष्वेते निवसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥६२॥**

[ अन्वयः ] सज्जनसङ्गमे वाञ्छा, परगुणे प्रीतिः, गुरौ नम्रता, विद्यायां व्यसनं, स्वयोषिति रतिः, लोकापवादाद्भयं, शूलिनि भक्तिः, आत्मदमने शक्तिः, खले संसर्गमुक्तिः, एते निर्मलगुणा येषु निवसन्ति तेभ्यो नरेभ्यो नमः ॥

[ विग्रहः ] सज्जनानां सज्जनैर्वा सङ्गमः—सज्जनसङ्गमः, तस्मिन् । परेषां गुणः परगुणः । तस्मिन् । स्वस्य योषित् स्वयोषित्, तस्यां स्वयोषिति । लोकानां लोके वा अपवादः, लोकापवादः तस्मात् । आत्मनः दमनम् आत्मदमनम् । तस्मिन् । संसर्गस्य मुक्तिः संसर्गमुक्तिः । निर्मला गुणाः—निर्मलगुणाः ।

[ राजलक्ष्मीः ] सज्जनसङ्गमे=सत्पुरुषसंसर्गे । सज्जनमैत्र्याम् । वाञ्छा = इच्छा । परगुणे=अन्यगुणे । परेषां गुणे । प्रीतिः=स्नेहदर्शनम् । गुरौ = आचार्ये मातरि पितरि च । नम्रता = विनयः । विद्यायां = शास्त्रेषु । विद्याभ्यासे । व्यसनम् = आसक्तिः । स्वयोषिति–स्वभार्यायाम् । रतिः=प्रेम । अनुरागः । लोकापवादात्=लोकनिन्दातः । भयं= भीतिः । शूलिनि = त्रिशूलायुधे भगवति शिवे च । भक्तिः = अनुरागः । आत्मदमने = इन्द्रियमनोनिग्रहे । शक्तिः = सामर्थ्यम् । खले = दुर्जने । संसर्गमुक्तिः = सम्बन्धत्यागः । सम्पर्कमोक्षः । एते = पूर्वोक्ताः । निर्मलगुणाः = निर्दोषा गुणाः । येषु = येषु नरेषु । वसन्ति = निवसन्ति । तेभ्यो नरेभ्यः = तेभ्यः पुरुषेभ्यः । नमः = नमोऽस्तु । ते मान्या इत्यर्थः । 'शार्दूलविक्रीडित वृत्तम्' ।

[कोशः] 'शिवः शूली महेश्वरः' इत्यमरः। 'लोकस्तु भुवने जने' इत्यमरः। 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः।

[भाषाटीका] सज्जनों की सङ्गति में इच्छा, दूसरों के गुणों में प्रेम, गुरुजनों से नम्रता, विद्या पढने में लगन, अपनी स्त्री में अनुराग, लोकापवाद से डर, शिव जी की भक्ति, अपनी इन्द्रियों व मन को दमन करने की शक्ति, दुष्टों की सङ्गति से दूर रहना–ये उत्तम गुण जिन पुरुषों में हैं उनको हमारा नमस्कार है। अर्थात् वे मान्य हैं ॥ ६२ ॥

विपदि धैर्यमथाभ्युदये क्षमा,
सदसि वाक्पटुता, युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ,
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६३ ॥

[अन्वयः] विपदि धैर्यम्, अथ अभ्युदये क्षमा, सदसि वाक्पटुता, युधि विक्रमः, यशसि चाभिरुचिः, श्रुतौ व्यसनम्। इदं हि महात्मनां प्रकृतिसिद्धम् [ अस्ति ] ॥

[ विग्रहः ] वाचः पटुता वाक्पटुता। प्रकृत्या सिद्धं प्रकृतिसिद्धम्।

[ राजलक्ष्मीः ] विपदि = विपत्तिकाले। आपदि। धैर्यं = धीरता। अथ किञ्च। अभ्युदये=उन्नतौ। अभिवृद्धौ। क्षमा = क्षान्तिः। सहनशीलता। सदसि = सभायाम्। वाक्पटुता=वाग्मित्वम्। वाचोयुक्तिपटुता। युधि = समरे। युद्धे च। विक्रमः=पराक्रमः। यशसि च= कीर्त्तौ च। अभिरुचिः =वाञ्छा। लालसा। श्रुतौ-वेदे। शास्त्रे च। व्यसनम्=आसक्तिः। इदं हि =एतद्धि सर्वम्। महात्मनाम्=उदारचरितानाम्। प्रकृतिसिद्धं=स्वभावसिद्धम्। अस्तीति शेषः। द्रुतविलम्बितं वृत्तम्।

[ भावार्थः ] विपदि धैर्यं समृद्धौ क्षमा वाक्पाटवं पराक्रमः शास्त्रव्यसनित्वं चेत्यादयो गुणा महात्मनां सहजा एव।

[कोशः] 'सभासमितिसंसदः'। 'आस्थायी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः'

इत्यमरः । 'समित्याजिसमिद्युधः' इत्यमरः । 'श्रुतिः स्त्री वेद आम्नायः'इत्यमरः ।

(भाषाटीका) विपत्ति में धैर्य, अभ्युदय (उन्नति व बड़ा अधिकार पाकर) क्षमा, सभा में वाक्पटुता, युद्ध में पराक्रम, यश की इच्छा, शास्त्रों में व्यसन—ये सब महात्माओं के स्वभाव सिद्ध गुण होते हैं ॥ ६३ ॥

**प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः,**
**प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।**
**अनुत्सेको [1]लक्ष्म्या, निरभिभवसाराः[2] परकथाः,**
**सतां केनोद्दिष्टं विसममसिधाराव्रतमिदम् ॥ ६४ ॥**

[ अन्वयः ] प्रदानं प्रच्छन्नं, गृहमुपगतेः सम्भ्रमविधिः, प्रियं कृत्वा मौनम्, उपकृतेः चापि सदसि कथनं, लक्ष्म्यामनुत्सेकः, परकथाः निरभिभवसाराः । इदं सतां विषमम् असिधाराव्रतं केनोपदिष्टम् ? ॥

[ विग्रहः ] सम्भ्रमस्यविधिः सम्भ्रमविधिः । न उत्सेकः अनुत्सेकः । परेषां कथाः परकथाः । निरभिभवः—अतिरस्कारः सारो यासु ताः अनभिभवसाराः । असिधारावद्व्रतम्—असिधाराव्रतम् ।

[ राजलक्ष्मीः ] प्रदानं=सत्पात्रे दानम् । प्रच्छन्नं=निगूढम् । गृहं=गेहम् । उपगते=सम्प्राप्तेऽतिथौ । सम्भ्रमविधिः=सत्कारविधानम् । सादरं सत्कारविधिः । प्रियं=इष्टं । कृत्वा=विधायापि । मौनम्=तस्याऽकथनम् । अप्रकाशनं । स्वमुखेनाऽकथनम् । उपकृतेश्चापि=स्वल्पस्य परकृतोपकारस्यापि । सभायाम्=जनसंसदि । कथनं=प्रकाशनम् । सङ्कीर्त्तनम् । लक्ष्म्यां=विभवे । संपदि । अनुत्सेकः=अगर्वः । परकथाः=अन्यकथाः । परविषयिण्योवार्त्ताः । निरभिभवसाराः=परतिरस्कारशून्याः । परतिरस्कारलेशसम्पर्कशून्याः । इदं एतत् । सतां=

१ 'लक्ष्म्यामनभिभव' पा० ।

२ 'अनभिभवसाराः' इति केचित्पठन्ति ।

सत्पुरुषाणाम्। विषमं=कठिनम् । असिधाराव्रतं=खड्गधारासदृशं व्रतम्। केनोद्दिष्टं=केनोपदिष्टम्। न तद्विन्म इत्यर्थः। शिखरिणीवृत्तम् ।

[ कोशः ] 'सम्भ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपी'ति मेदिनी।

[ भाषाटीका ] दान को गुप्त रखना, घर पर कोई आए तो उसका आदर-पूर्वक सत्कार करना, किसी का हित ( उपकार ) करके भी उसकी चर्चा तक नहीं करना, दूसरे के उपकार को सभा में सबके सामने कहना, धन सम्पत्ति पाकर भी घमण्ड नहीं करना, दूसरों की जब बात चले तो उनके प्रति थोड़ा सा भी—अनादर नहीं दिखाना, इस प्रकार सज्जनों को तलवार की धार की तरह कठिन इन नियमों का किसने उपदेश दिया ?॥ ६४ ॥

करे श्लाघ्यस्त्यागः, शिरसि गुरुपादप्रणयिता,
मुखे सत्या वाणी, विजयि भुजयोर्वीर्यमतुलम्।
हृदि स्वच्छा वृत्तिः, श्रुतमधिगतं च श्रवणयो-
र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ६५ ॥

[ अन्वयः ] करे [1]त्यागः श्लाघ्यः, शिरसि गुरुपादप्रणयिता, मुखे सत्या वाणी, भुजयोः विजयि अतुलं वीर्यम्। हृदि स्वच्छा वृत्तिः, श्रवणयोः च अधिगतं श्रुतम्। इदम् प्रकृतिमहताम् ऐश्वर्य्येण विनाऽपि मण्डनम् ॥

[ विग्रहः ] गुरोः पादौ गुरुपादौ, तयोः प्रणयी, गुरुपादप्रणयी, तस्य भावः गुरुपादप्रणयिता। प्रकृत्या महान्तः प्रकृतिमहान्तः, तेषां—प्रकृतिमहताम्।

[ राजलक्ष्मीः ] करे=हस्ते। त्यागः=दानम्। श्लाघ्यः=प्रशंसनीयः। शिरसि=मस्तके। गुरुपादप्रणयिता=गुरुचरणानुरागिता। श्लाघ्येति विभक्तिविपरिणामेन योजना। मुखे=आनने। सत्या=तथ्या। सूनृता। वाणी=वाक्। [ श्लाघ्या ]। भुजयोः=बाह्वोः। विजयि=विजयशीलं। जेतृ। नास्ति तुला यस्य तत्-अतुलं=निरुपमम्।

१ केचित्तु करे श्लाघ्यः—श्रेष्ठः त्याग इति योजयन्ति।

वीर्यं = पराक्रमः। पौरुषम् । श्लाघ्यमिति शेषः । हृदि = हृदये च। स्वच्छा = अवदाता। निर्मला। वृत्तिः = भावः। चित्तवृत्तिः [ श्लाघ्या ]। श्रवणयोश्च=कर्णयोश्च। अधिगतं=गुरूपासनया सम्प्राप्तम्। श्रुतं = वेद-शास्त्रादिकम्। इदम्=एतत्पूर्वोक्तं सकलम् । प्रकृतिमहतां=स्वाभाविकोदाराणाम्। महापुरुषाणाम्। ऐश्वर्येण विनाऽपि = विभवेन विनाऽपि। मण्डनं=भूषणम्। 'भवती'ति शेषः। शिखरिणी वृत्तम्।

[ भावार्थः ] प्रकृतिमहतां दान–गुरुभक्ति–सत्यभाषण–वीर्यादिकमेव तत्तदङ्गेषु यथायथं द्रविणनिरपेक्षं भूषणम्।

[ कोशः ] 'त्यागो विहापितं दानमुत्सर्जनविसर्जने' इत्यमरः । 'गीर्वाग्वाणी सरस्वती' इत्यमरः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः।

[ भाषाटीका ] हाथ का भूषण दान, शिर का भूषण गुरुचरणों में भक्ति, मुख का भूषण–सच्ची वाणी, भुजा का भूषण–विजय शील अनुपम पराक्रम, हृदय का भूषण–स्वच्छ निर्दोष चित्तवृत्ति, कान का भूषण–गुरु से पढ़े गये वेद व शास्त्र। ये सब महात्माओं के धन की अपेक्षा न करने वाले स्वभावसिद्ध स्वाभाविक आभूषण हैं ॥ ६५ ॥

सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासङ्घातकर्कशम् ॥ ६६ ॥

[ अन्वयः ] महतां चित्तं सम्पत्सु उत्पलकोमलं ( भवति ) । आपत्सु च महाशैलशिलासङ्घातकर्कशम् ( भवति )।

[ विग्रहः ] उत्पलमिव कोमलम्, उत्पलकोमलम्। महांश्चासौ शैलश्च महाशैलः, महाशैलस्य शिलाः, महाशैलशिलाः, तासां संघातः महाशैलशिलासङ्घातः। तद्वत्कर्कशं—महाशैलशिलासङ्घातकर्कशम्।

[ राजलक्ष्मीः ] महतां=महात्मनाम् । महापुरुषाणाम् । चित्तं=मानसम्। हृदयम् । सम्पत्सु=सम्पत्तौ । समृद्धौ । उत्पल-

कोमलं = कुवलयमृदुलम् । कमलकोमलम् । भवतीति शेषः । आपत्सु च = विपत्सु च । महाशैलशिलासङ्घातकर्कशं = महागिरिदृषत्सङ्घातकठोरम् । वज्रकठिनम् । भवतीति शेषः ।

[ भावार्थः ] महान्तो हि वैभवे समृद्धौ च दयालवो भवन्ति । विपत्तौ वज्रवत्कठोरहृदया भूत्वा विपत्तिं सहन्ते ।

[ कोशः ] 'स्यादुत्पलं कुवलयम्' इत्यमरः । 'कर्कशं कठिनं क्रूरम्' इत्यमरः । 'कोमलं मृदुलं मृदु' इत्यमरः ।

[ भाषाटीका ] महात्माओं का मन सम्पत्तिकाल में कमल की तरह कोमल होता है, विपत्तिकाल में महापर्वत की बड़ी चट्टानों की तरह कठोर होता है ; अर्थात् विपत्ति में वे घबड़ाते नहीं है ॥ ६६ ॥

**संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते,**
**मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।**
**स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते,**
**प्रायेणाधममध्यमोत्तमगुणः[1] संसर्गतो जायते ॥ ६७ ॥**

[ अन्वयः ] संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते, तदेव नलिनीपत्रस्थितं मुक्ताकारतया राजते । तत् स्वात्यां सागरशुक्तिमध्यपतितं मौक्तिकं जायते । प्रायेणाऽधममध्यमोत्तगुणः ( हि ) संसर्गतो जायते ॥

[ विग्रहः ] सन्तप्तश्च तदयश्च सन्तप्तायः, तस्मिन् सन्तप्तायसि । मुक्ताया आकार इव आकारो यस्यासौ मुक्ताकारः, तस्य भावस्तया—मुक्ताकारतया । नलिन्याः पत्रं नलिनीपत्रं, तत्र स्थितं—नलिनीपत्रस्थितम् । सागरस्य शुक्तिः-सागरशुक्तिः, तस्या मध्ये पतितं सागरशुक्तिमध्यपतितम् । अधमाश्च मध्यमाश्च उत्तमाश्च अधममध्यमोत्तमाः, ते गुणा यस्यासौ अधममध्यमोत्तमगुणः ।

[ राजलक्ष्मीः ] सन्तप्तायसि = उत्तप्तलोहे । प्रदीप्तलोहनिर्मितभर्जनपात्रे । संस्थितस्य=व्यवस्थितस्य । वर्त्तमानस्य । प्रक्षिप्तस्य । पयसः =

---

१ 'प्रायेणाऽधममध्यमोत्तमजुषामेवंविधा वृत्तयः' । पा० ।

जलस्य । नामापि = नामधेयमपि । अवस्थितिवार्त्ताऽपि । सत्ताऽपि । न ज्ञायते = नावबुध्यते । तदेव = जलमेव । नलिनीपत्रस्थितं = कमलिनीदलगतं सत् । मुक्ताकारतया = मौक्तिकाकारेण । राजते = शोभते । तत् = तदेव जलम् । स्वात्यां = स्वातिनक्षत्रस्थे सूर्ये । सागरशुक्तिमध्यपतितं=पश्चिमसमुद्रगतशुक्तिसम्पुटान्तरालनिपतितम् । मौक्तिकं=मुक्ताफलं । जायते = भवति । [ हि = यतः ] प्रायेण=बाहुल्येन । ( पदार्थः- ) अधममध्यमोत्तमगुणः = निकृष्टमध्यमश्रेष्ठगुणवान् । संसर्गादिति संसर्गतः=तादृशपदार्थान्तरसम्पर्कतः । जायते=सम्पद्यते । पाठान्तरे तु—अधममध्यमोत्तमजुषां=नीचमध्यमश्रेष्ठसम्पर्कभाजाम् । एवंविधाः= ईदृश्य एव । वृत्तयः=प्रकाराः । भवन्तीति शेषः—इत्यर्थो बोध्यः । शार्दूलविक्रीडितं वृत्तम् ।

[ भावार्थः ] जनो हि नीचसंसर्गान्नीचः मध्यमलोकसंसर्गान्मध्यमः, श्रेष्ठजनसंसर्गादुत्तमश्च भवति । तथा—तप्तलोहगतं जलं नश्यति, कमलपत्रे मुक्तावद्राजते, स्वात्यां शुक्तिमध्यगतं तु मौक्तिकमेव भवतीत्यहो ! सत्सङ्गमहिमा, दुर्जनसम्पर्कस्यानर्थमूलत्वञ्च ।

[ कोशः ] 'लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी' इत्यमरः । 'अथ मौक्तिकम् । मुक्ता' इत्यमरः ।

[ भाषाटीका ] गर्म लोहे के पात्र ( तवा ) पर गिरे हुए जल का पता भी नहीं लगता, वही जल कमलिनी ( कमल की लता ) के पत्ते पर पड़ने से मोती की तरह चमकने लगता है । वही जल स्वाती नक्षत्र पर जब सूर्य हों उस समय यदि ( अरब ) समुद्र की सीपी में गिरे तो मोती हो जाता है । ठीक है—अधम, मध्यम, उत्तम के सम्बन्ध से पदार्थ भी अधम, मध्यम, उत्तम गुणवाला होता है ॥ ६७ ॥

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो,
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।

तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ६८ ॥

[ अन्वयः ] यः पितरं सुचरितैः प्रीणयेत् स पुत्रः, यद्भर्तुः हितमिच्छति तदेव कलत्रं, यदापदि सुखे च समक्रियम् तन्मित्रम्, एतत्त्रयं जगति पुण्यकृतो लभन्ते ॥

[ विग्रहः ] सुष्ठु चरितानि सुचरितानि, तैः सुचरितैः। समा क्रिया यस्य तत्। पुण्यं कृतवन्त इति पुण्यकृतः।

[ राजलक्ष्मीः ] यः = यः पुमान्। सुचरितैः = सदाचरणादिभिः। शोभनकृत्यैः। पितरं = जनकम्। प्रीणाति = हर्षयति। सः = स एव। पुत्रः = सत्पुत्रः। सदात्मजः। यत् = यत्कलत्रम्। भर्त्तुः = पत्युः। हितं = कल्याणं। मङ्गलम्। इच्छति = वाञ्छति। तदेव = तादृगेव। कलत्रं = सत्कलत्रम्। सती भार्या। यद्वा यद्भर्त्तुरेव हितमिच्छति नान्येषां तत्कलत्रमिति योजना। यत् = यन्मित्रम्। आपदि = विपत्तौ। सुखे च = सम्पत्तौ च। समक्रियं = तुल्यव्यापारम्। तुल्यानुभूति। तदेव मित्रं = स एव सुहृत्। एतत्त्रयम् = इदं त्रयम्। जगति = लोके। पुण्यकृतः = सुकृतिन एव। लभन्ते = प्राप्नुवन्ति। नान्ये। 'वसन्ततिलका वृत्तम्'।

[ भावार्थः ] सत्पुत्रः, सती भार्या, सुखदुःखयोः समानं हितकारकं मित्रञ्चेत्येतत्त्रयं पुण्येनैव सुकृतिभिर्लभ्यते, नान्यैः।

[ कोशः ] 'तातस्तु जनकः पिता' इत्यमरः। 'आत्मजस्तनयः सूनुः सुतः पुत्रः' इत्यमरः। 'कलत्रं श्रोणिभार्ययोः' इत्यमरः। 'अथ मित्रं सखा सुहृत्' इत्यमरः।

[ भाषाटीका ] जो पुत्र अपने सदाचार से पिता को प्रसन्न करे वही सच्चा पुत्र है। जो स्त्री पति का हित सबसे पहिले चाहे वही सच्ची स्त्री है। जो मित्र सुख दुःख में समान रूप से सहायक हो वही सच्चा मित्र है। ये तीनों इस संसार में बड़े भाग्य से पुण्यात्माओं को ही मिलते हैं। सब को नहीं ॥ ६८ ॥

एको देवः केशवो वा शिवो वा,
[1]ह्येकं मित्रं भूपतिर्वा यतिर्वा
एको वासः पत्तने वा वने वा,
एका नारी सुन्दरी वा दरी वा ॥ ६६ ॥

[ अन्वयः ] एको देवः केशवो वा शिवो वा [ आश्रयणीयः ]। हि एकं मित्रं भूपतिर्वा, यतिर्वा [ कर्त्तव्यः ]। एको वासः पत्तने वा वने वा [ कर्तव्यः ]। एका नारी सुन्दरी वा दरी वा [ कर्तव्या ]॥

[ राजलक्ष्मीः ] एको देवः = एक एव देवः। केशवो वा = विष्णुर्वा। शिवो वा = महेश्वरो वा। [ आश्रयणीयः। संसेव्य इति शेषः ]। हि= किञ्च एकं मित्रम् = एक एव सुहृत्। भूपतिर्वा = राजा वा। यतिर्वा = भिक्षुर्वा। 'कर्त्तव्य' इति शेषः। एको वासः = एक एव निवासः। पत्तने वा = नगरे वा। वने वा = अरण्ये वा। कर्त्तव्यः। एका = एकैव। नारी= योषित्। सुन्दरी वा = रमणीरत्नं वा। दरी वा = गुहा वा। कर्त्तव्या। शालिनी वृत्तम्।

[ भावार्थः ] शिवो विष्णुर्वा सेव्यः, राज्ञां-कुलं वा, वनं वा सेव्यम्। नगरे वने वा वासो विधेयः, रमणीरत्नं वा दरी वा सेव्या। अर्थात्-अनुरक्तेन राजोचिता भोगाः संसेव्याः, विरक्तेन च वनं सेव्यम्।

[ कोशः ] 'पूः स्त्री पुरी नगर्यौ वा पत्तनं पुटभेदनम्' इत्यमरः। 'दरी तु कन्दरो वाऽस्त्री' इत्यमरः।

[ भाषाटीका ] शिव वा विष्णु—इन में से श्रद्धानुसार एकही देव की सेवा करनी चाहिए। राजा को या साधु को एक ही को मित्र बनाना चाहिए, नगर में या वन में निवास करना चाहिए, एक ही स्त्री होनी चाहिए वह चाहे सुन्दरी हो या दरी ( गुफा ) हो ॥ ६९ ॥

---

१ 'एकं'।

**नम्रत्वेनोन्नमन्तः[1] परगुणकथनैः स्वान्गुणान्ख्यापयन्तः,**
**स्वार्थान्सम्पादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ।**
**क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्जनान्दूषयन्तः**
**सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ॥**

[ अन्वयः ] नम्रत्वेनोन्नमन्तः, परगुणकथनैः स्वान् गुणान् ख्यापयन्तः, परार्थैः विततप्रियतरारम्भयत्नाः स्वार्थान्सम्पादयन्तः, क्षान्त्यैवाक्षेपरूक्षाक्षरमुखर-मुखान्दुर्जनान् दूषयन्तः साश्चर्यचर्याः सन्तो जगति बहुमताः कस्य नाभ्यर्चनीयाः ? ।

[ विग्रहः ] परेषां गुणाः परगुणाः, तेषां कथनानि तैः-परगुणकथनैः । स्वस्य अर्थाः स्वार्थाः, तान् । पृथुतर आरम्भो येषान्ते पृथुतरारम्भाः, वितताश्च ते पृथु-तरारम्भाश्च विततपृथुतराम्भाः, तादृशा यत्ना येषान्ते विततपृथुतरारम्भयत्नाः । परेषाम् अर्थः परार्थः, तस्मिन् । आक्षेपेण रूक्षाण्यक्षराणि आक्षेपरूक्षाक्षराणि, तैः मुखराणि मुखानि येषान्ते-आक्षेपरूक्षाक्षरमुखरमुखाः, तान् । आश्चर्येण सहिता साश्चर्या चर्या येषान्ते साश्चर्यचर्याः । बहु यथा स्यात्तथा मताः बहुमताः । बहूनां मताः बहुमता इति वा ।

[ राजलक्ष्मीः ] नम्रत्वेन = नम्रतया । न तूद्दण्डतया । उन्नमन्तः । उन्नतिं कुर्वन्तः । पाठान्तरे उल्लसन्तः = कीर्तिमासादयन्तः । परगुणक-थनैः = परकीयगुणवर्णनादिभिः । परप्रशंसाभिः । स्वान् = स्वकीयान् । गुणान् = औदार्यादीन् । ख्यापयन्तः = ख्यातिं नयन्तः । विस्तारयन्तः । परार्थे = परकीयकार्यनिष्पादनाय । विततपृथुतरारम्भयत्नाः = विस्तृता-तिविपुलोद्योगप्रयत्नाः सन्तः । परोपकारार्थकृतातिदीर्घकायमनोव्या-पाराः सन्तः । स्वार्थान् = स्वकार्याणि । सम्पादयन्तः = घटयन्तः । आ-नुषङ्गिकतया अनायासेन वा स्वकार्यं साधयन्तः । आक्षेपरूक्षाक्षरमुखर-

१ उल्लसन्तः ।

मुखान् = अधिक्षेप-परुषाक्षरशब्दायमानवदनान्। निन्दाक्रूराक्षरवाचालितमुखान्। दुर्जनान् = खलान्। क्षान्त्यैव = क्षमयैव। दूषयन्तः = तिरस्कुर्वन्तः। निष्फलोद्यमान् कुर्वन्तः। साश्चर्यचर्याः = अद्भुतचेष्टाः। आश्चर्यकारकव्यापाराः। जगति = लोके। बहुमताः = सम्भाविताः। सन्तः = सत्पुरुषाः। कस्य = कस्य पुंसः। नाभ्यर्चनीयाः = न पूज्याः। सर्वेषामेव पूज्या इत्यर्थः। स्रग्धरा वृत्तम्।

[ भावार्थः ] नम्रतयोन्नतिमासादयन्तः परोपकारपरा दुर्जनानुपेक्षयैव पराजयं नयन्तो महान्तः सत्पुरुषाः सर्वेषामेव मान्याः।

[ कोशः ] 'दुर्मुखे मुखराऽऽबद्धमुखौ' इत्यमरः।

[ भाषाटीका ] नम्रता व विनय से ही अपनी उन्नति करने वाले, दूसरे के कार्यों में पूर्ण पुरुषार्थ व उद्योग से प्रयत्न करते हुए अपने कार्यों को सिद्ध करने वाले, बुरे २ शब्दों से निन्दा करने वाले व गाली देने वाले दुष्टों को भी क्षमा से ही पराजित करने वाले, आश्चर्यजनक अनोखे ऊँची श्रेणी के आचरण वाले, आदरणीय सत्पुरुष किसके पूज्य नहीं है ?। अर्थात् सभी के पूज्य हैं॥ ७०॥

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो[1] घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभि,
स्स्वभाव एवैष परोपकारिणाम्॥ ७१॥

[ अन्वयः ] तरवः फलोद्गमैः नम्रा भवन्ति, घनाः नवाम्बुभिर्दूरविलम्बिन [ भवन्ति ]। सत्पुरुषाः समृद्धिभिरनुद्धताः [ भवन्ति ]। एष परोपकारिणां स्वभाव एव।

[ विग्रहः ] फलानामुद्गमाः, तैः। नवानि च तानि अम्बूनि नवाम्बूनि, तैः। दूरं विलम्बन्ते तच्छीलाः दूरविलम्बिनः। न उद्धताः अनुद्धताः। सन्तश्च ते पुरुषाश्च सत्पुरुषाः। परानुपकुर्वते तच्छीलाः परोपकारिणः, तेषाम्।

१ 'भूमिविलम्बिनः' इति पाठान्तरम्।

[ राजलक्ष्मीः ] तरवः = वृक्षाः । फलोद्गमैः = फलप्रादुर्भावैः । फलसम्पत्त्या । नम्राः=विनताः । विनम्राः । भवन्ति = जायन्ते । किञ्च । घनाः = मेघाः । नवाम्बुभिः = नूतनवारिभिः । नवीनजलसम्पत्त्या । दूरविलम्बिनः = अधोलम्बमानाः । नितरां नीचैर्विलम्बिनः । भवन्तीति शेषः । सत्पुरुषाः=सज्जनाः । समृद्धिभिः = सम्पत्तिभिः । विभवैः । अनुद्धताः=नम्राः । भवन्तीति शेषः । एषः = अयम् । सम्पत्तौ नम्रताप्रदर्शनरूपः । परोपकारिणां=परोपकारपरायणानाम् । स्वभाव एव=प्रकृतिरेव । निसर्ग एव । वंशस्थं वृत्तम् ।

[ भावार्थः ] समृद्धौ सन्तोऽतितरां नमन्ति ।

[ कोशः ] 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः' इत्यमरः ।

[ भाषाटीका ] फलों के आगमनकाल में वृक्ष भी नम्र हो जाते हैं । जलसे भरने पर मेघ भी भूमि की ओर ( नीचे ) लटक आते हैं । समृद्धिमें सज्जन लोग और भी नम्र हो जाते हैं । परोपकारियों का ( वृक्ष, मेघ,सज्जनोंका ) यह (नम्रता) स्वाभाव ही है ॥ ७१ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन,
दानेन पाणिर्नतु कङ्कणेन ।
विभाति कायः करुणापराणां
परोपकारैर्नतु चन्दनेन ॥ ७२ ॥

[ अन्वयः ] श्रोत्रं श्रुतेन विभाति, कुण्डलेन न [ विभाति ], पाणिः दानेन ( विभाति ), न कङ्कणेन, करुणापराणां कायः परोपकारैर्विभाति, तु चन्दनेन न [ विभाति ] ।

[ विग्रहः ] करुणानां पराः ( प्रसक्ताः ) करुणापराः, तेषां करुणापराणाम् । परेषामुपकाराः, परोपकाराः, तैः ।

[ राजलक्ष्मीः ] श्रोत्रं = कर्णः । श्रुतेन = वेदेन, शास्त्रेण च । विभाति=शोभते । कुण्डलेन = कर्णवेष्टनाख्येन कर्णाभरणेन । न = नैवं विभाति । पाणिः = हस्तः । दानेन = त्यागेन । [विभाति] । नतु = नैव खलु ।

कङ्कणेन = करभूषणेन । [ विभाति ] । करुणापराणां = कारुण्यैकनिविष्टमानसानाम् । दयापराणाम् । कृपाप्रसक्तानाम् । कायः = शरीरम् । परोपकारैः = परहितसाधनैः । विभाति = शोभते । तु = किन्तु । चन्दनेन = मलयजेन । न = नैव विभाति ।

[ भावार्थः ] श्रुतेन कर्णौ दानेन हस्तः परोपकारेण वपुश्च विभाति न स्वर्णाभरणैः ।

[ कोशः ] कुण्डलं कर्णवेष्टनम्' इत्यमरः । कङ्कणं करभूषणम्' इत्यमरः । 'गन्धसारो मलयजो भद्रश्रीचन्दनोऽस्त्रियाम्' इत्यमरः ।

[ भाषाटीका ] कान की शोभा गुरु से सुने हुए वेद व शास्त्रों से है, कुण्डल से नहीं । हाथ की शोभा दानसे है, कङ्कण ( सोने के कडा ) से नहीं, दयालुओं के शरीर की शोभा परोपकारसे है, चन्दन के लगाने से नहीं ॥ ७२ ॥

**पापान्निवारयति योजयते हिताय,**
**गुह्यं निगूहति[1], गुणान्प्रकटीकरोति ।**
**आपद्गतं च न जहाति, ददाति काले,**
**सन्मित्रलक्षणमिदं प्रवदन्ति[2] सन्तः ॥७३॥**

[ अन्वयः ] पापात् निवारयति, हिताय योजयते, गुह्यं निगूहति, गुणान्प्रकटीकरोति, आपद्गतं च न जहाति, काले ददाति, सन्त इदं सन्मित्रलक्षणम् प्रवदन्ति ।

[ विग्रहः ] आपदं गतः—आपद्गतः, तम्—आपद्गतम् । सच्च तन्मित्रं च सन्मित्रं, तस्य लक्षणं, सन्मित्रलक्षणं, तत् ।

[ राजलक्ष्मीः ] पापात् = किल्विषात् । दुस्कृतात् । निवारयति = निवर्त्तयति । हिताय = हितं कर्म कर्त्तुम् । योजयते = नियुनक्ति । विनियोजयति । गुह्यं = गोपनीयम् । रहस्यम् । छिद्रं । निगूहति = संवृणोति । आच्छादयति । गुणान् = औदार्यादिगुणान् । प्रकटीकरोति = प्रकाशयति । विस्तारयति । आपद्गतं = विपन्नम् ।

१ 'गुह्यं च गूहति' 'गुह्यं न गूहति' पा० । २ 'निगदन्ति' ।

विपत्तिविक्लवम् । न जहाति = न त्यजति । काले = प्रदानोचित समये च । ददाति = धनं, सहायतां च ददाति । सन्तः = साधवः । सत्पुरुषाः । इदम् = एतत् । सन्मित्रलक्षणं = सुहृल्लक्षणं । प्रवदन्ति = निगदन्ति [ 'गुह्यं न गूहती'ति पाठे–स्वरहस्यमपि प्रकाशयति न निगूहत इत्यर्थः ] । वसन्ततिलका वृत्तम् ।

[ कोषः ] 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः ।

[ भाषाटीका ] मित्र को पाप से बचाए, हितकारी कार्यों में प्रवृत्त करे, मित्र की छिपाने की ( गुप्त ) बातों को प्रकट न करे, मित्र के गुणों को फैलावे । विपत्ति में उसकी सहायता करे, मौका पड़ने पर धन देवे–ये सच्चे मित्र के लक्षण हैं––ऐसा पण्डित लोग कहते हैं ॥ ७३ ॥

पद्माकरं दिनकरो विकचीकरोति,
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति,
सन्तः स्वयं परहितेषु कृताभियोगाः ॥ ७४ ॥

[ अन्वयः ] ['नाभ्यर्थितः—] दिनकरः पद्माकरं विकचीकरोति । [ नाभ्यर्थितः– ] चन्द्रः कैरवचक्रवालं विकासयति, नाभ्यर्थितो जलधरोपि जलं ददाति, सन्तः स्वयं परहितेषु कृताभियोगाः । (भवन्ति) ।

[ विग्रहः ] न अभ्यर्थितः नाभ्यर्थितः । न शब्देन सुप्सुपेति समासः । दिनं करोतीति दिनकरः । पद्मानामाकरः पद्माकरः, तम् । अविकचनं विकचं करोति विकचीकरोति । कैरवाणां चक्रवालं । तत् । परेषां हिताः परहिताः, तेषु परहितेषु । कृतः अभियोगो यैस्ते कृताभियोगाः ।

[ राजलक्ष्मीः ] नाभ्यर्थितः = अप्रार्थितः । अयाचित एव । दिनकरः = दिवसकृत् । सूर्यः । पद्माकरं = कमलाकरम् । कमलवनीम् । विकचीकरोति = विकाशयति । ( नाभ्यर्थितः = अप्रार्थित एव च ) । चन्द्रः = इन्दुः । कैरवचक्रवालम् = कुमुदमण्डलम् । कुमुदवनम् ।

विकाशयति = विकचतां नयति । नाभ्यर्थिताः = अप्रार्थित एव । जलधरः = मेघः । अम्बुदः । जलं = वारि । ददाति = वितरति । वर्षति । (यतः) सन्तः = सत्पुरुषाः । स्वयम् = आत्मनैव । परहितेषु = परोपकार कार्येषु । कृताभियोगाः = कृतोद्योगाः । कृतयत्नाः । भवन्तीति शेषः ।

[ भावार्थः ] सन्तः स्वयमेव परोपकारकार्याणि कुर्वन्ति ।

[ कोशः ] 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । 'सिते कुमुद-कैरवे' इत्यमरः ।

[ भाषाटीका ] बिना कहे ही सूर्य कमलों की खान ( बन व समूह ) को विकसित करता है । प्रार्थना किए बिना ही चन्द्रमा भी कैरव (कोई पुष्प) के मण्डल को विकसित करता है । बिना मांगे ही मेघ जल बरसाते हैं । सज्जन लोग स्वयं ही परहित कार्यों को किया करते हैं ॥ ७४ ॥

[1]एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये,
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये,
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥७५॥

[ अन्वयः ] ये स्वार्थं परित्यज्य परार्थघटकाः ते एके सत्पुरुषाः, ये स्वार्थाऽविरोधेन परार्थमुद्यमभृतः (ते) तु सामान्याः, ये स्वार्थाय परहितं निघ्नन्ति तेऽमी मानुषराक्षसाः ( भवन्ति ) [ किन्तु ] ये निरर्थकं परहितं निघ्नन्ति ते के [ इति वयं ] न जानीमहे ।

[ विग्रहः ] सन्तश्च ते पुरुषाश्च सत्पुरुषाः । परेषामर्थाः परार्थाः, तेषां घटकाः परार्थघटकाः । परेभ्यः इदम् परार्थम् । उद्यमं बिभ्रतीति—उद्यमभृतः । स्वार्थस्याऽविरोधः स्वार्थाविरोधः, तेन । मानुषेषु राक्षसाः मानुषराक्षसाः । परस्य परेषां वा हितं परहितम् । स्वस्य अर्थः स्वार्थः, तस्मै स्वार्थाय । निर्गतः अर्थो यस्मात्तत् निरर्थकं, तद्यथा स्यात्तथा ।

---

[1] 'एते' ।

[ राजलक्ष्मीः ] ये=ये वै जनाः। स्वार्थं=स्वप्रयोजनम्। परित्यज्य=विहाय। परार्थघटकाः=परप्रयोजनसम्पादकाः। परकीयकार्यसाधकाः। ते=खलु। एके=मुख्याः। यद्वा-एके=केवलाः। त एवेति यावत्। सत्पुरुषाः=सज्जनाः। ये=ये पुरुषाः। स्वार्थाऽविरोधेन=स्वकार्याऽविरोधेन। परार्थं-परेषां कृते। उद्यमभृतस्तु=उद्योगभाजस्तु। सामान्याः=साधारणाः। [ यद्वा ते साधारणाः सत्पुरुषा इत्यर्थः ]। ये स्वार्थाय=स्वप्रयोजनाय। स्वहिताय। परहितं=परकार्यं। परार्थम्। निघ्नन्ति=विनाशयन्ति। तेऽमी=ते वै। मानुषराक्षसाः=मनुष्ययातुधानाः। नराधमाः। भवन्तीति शेषः। ये=येतु। निरर्थकं=निष्प्रयोजनम्। वृथैव। परहितं=परार्थम्। निघ्नन्ति। विघटयन्ति। ते=वृथापरकार्यहन्तारः। के=किंनामानः, कस्यां कोटौ च भवन्तीति। न जानीमः=न वयं विद्मः। ते नितरां नीचा इति यावत्।

[ कोशः ] 'एके मुख्यान्यकेवलाः' इत्यमरः। 'अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु' इत्यमरः।

[ भाषाटीका ] जो अपने स्वार्थ की अपेक्षा व हानि करके भी परहित कार्यों को सिद्ध करते हैं वे पुरुषों में श्रेष्ठ हैं। जो अपने स्वार्थ की उपेक्षा न कर ( अपने कार्य की हानि न हो वहीं तक ) पर कार्य को बनाने वाले हैं वे भी ( सामान्यतः ) सज्जन पुरुष हैं। ( या वे मध्यम कोटि के सज्जन हैं )। और जो अपने हित के लिए दूसरे के कार्य को बिगाड़ देते हैं वे मनुष्यों में राक्षस की तरह ( अधम ) हैं। परन्तु जो लोग बिना प्रयोजन ही दूसरे के कार्य की हानि किया करते हैं वे कौन ( किस कोटि में ) है—यह हम नहीं जानते। अर्थात् वे तो राक्षसों से भी नीच है॥ ७५॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा स्वेऽखिलाः[1]
क्षीरे [2]तापमवेक्ष्य तेन पयसा स्वात्मा[3] कृशानौ हुतः।

१ 'तेऽखिलाः' इति प्रचलितः पाठः। २ 'क्षीरोत्तापमवेक्ष्य'। ३ 'ह्यात्मा'।

गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति, सतां मैत्री पुनस्त्वीदृशी ॥ ७७ ॥

[ अन्वयः ] पुरा क्षीरेण हि आत्मगतोदकाय अखिलाः स्वगुण दत्ताः, तेन पयसा क्षीरे तापमवेक्ष्य स्वात्मा कृशानौ हुतः । तत्तु मित्रापदं पुनः दृष्ट्वा पावकं गन्तुमुन्मनोऽभवत् । तेन जलेन युक्तं ( सत् ) शाम्यति । सतां तु मैत्रीं ईदृशी ॥

[ विग्रहः ] आत्मनि गतम् आत्मगतम्, आत्मगतं च तदुदकञ्च—आत्मगतोदकं, तस्मै आत्मगतोदकाय । स्वस्यात्मा—स्वात्मा । मित्रस्यापत् मित्रापत्, तां मित्रापदम् । उद्गतं मनो यस्य तत्—उन्मनः ।

[ राजलक्ष्मीः ] पुरा=आदौ तु । क्षीरेंण हि=दुग्धेन हि । आत्मगतोदकाय=स्वाश्रिततोयाय । स्वगताय जलाय । अखिलाः=सकलाः । स्वे=आत्मीयाः [ 'ते' इति पाठे-प्रसिद्धाः शीतलत्वादयः स्वगुणा इत्यर्थः ] । गुणाः–शीतलत्वमधुरत्वश्वेतत्वादयो गुणाः । दत्ताः=विसृष्टाः । समर्पिताः । ( किञ्च ) तेन पयसा=तेन जलेन । क्षीरे=दुग्धे । तापं=सन्तापम् । अग्निजं सन्तापम् । अवेक्ष्य=विलोक्य । स्वात्मा=स्वशरीरम् । स्वदेहः । कृशानौवह्नौ । हुतः=निक्षिप्तः । तत्तु=दुग्धन्तु । मित्रापदं=वह्निना स्वसुहृज्जलविनाशम् । दृष्ट्वा=विलोक्य । पावकं=वह्निम् । गन्तुं=यातुम् । तत्र स्वात्मानं होतुम् । उन्मनः=उत्कण्ठितम् । अभवत्=बभूव । ततश्च तद्दुग्धं–तेन=स्वसुहृदा । जलेन=वारिणा । युक्तं=मिलितं सदेव । शाम्यति=शान्तं भवति । पुनः प्रकृतिमापद्यते । पुनः=किं च । सतान्तु=सज्जनानान्तु । मैत्री=मित्रता । ईदृशी=एतादृशी भवति । दुग्धजलवदेव भवतीत्यर्थः । 'शार्दूलविक्रीडितं वृत्तम्' ।

[ भावार्थः ] दुग्धेन स्वमित्राय जलाय स्वगुणास्तु दत्ताः । ततोऽग्निना दह्यमानं दुग्धं दृष्ट्वा जलेन स्वात्मैव वह्नौ हुतः । ततो जलं दुग्धं

दृष्ट्वा दुग्धमपि वह्नौ पतितुमुच्चचाल । पुनश्च केनचिन्निक्षिप्तं स्वमित्रं जलमासाद्य च दुग्धं प्रकृतिस्थं भवति । ईदृश्येव च सतां मैत्री ।

[ कोशः ] 'दुग्धं क्षीरं पयः समम्' इत्यमरः । 'कृशानुः पावकोऽनलः' इत्यमरः ।

[ भाषाटीका ] दुग्ध ने स्वाश्रित अपने मित्र जल को अपने गुण तो पहिले ही दे दिए थे । फिर अग्नि पर दूध को सन्तप्त ( गर्म ) होते देखकर जल ने अपने को अग्नि में जला दिया । दुग्ध भी अपने मित्र जल को न देख अग्नि में जाने ( उफनने ) लगा । तब किसी ने जल का छींटा दिया तब अपने मित्र जल को पाकर वह दूध शान्त हुआ । इसी प्रकार ( दूध-जल की सी ) सज्जनों की भी मित्रता होती है ॥ ७६ ॥

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनां[1] शिखरिणां गणाः शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो ! विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥७७॥

[ अन्वयः ] इतः केशवः स्वपिति, इतस्तदीयद्विषां कुलम् । इतश्च शरणार्थिनः शिखरिणां गणाः शेरते । इतोऽपि समस्तसंवर्तकैः सह वडवानलः । अहो सिन्धोर्वपुर्विततमूर्जितं भरसहं च ॥

[ विग्रहः ] तस्य इमे तदीयाः, तदीयाश्च ते द्विषश्च तदीयद्विषः, तेषाम् । शरणमर्थयन्ते तच्छीलाः शरणार्थिनः, तेषाम् । शिखराणि सन्त्येषां शिखरिणः, तेषाम् । समस्ताश्च ते संवर्त्तकाः, समस्तसंवर्त्तकाः, तैः । सहते इति सहम् । भरस्य सहं भरसहम् ।

[ राजलक्ष्मीः ] इतः = अस्मिन् कोणे । एकस्मिन्प्रदेशे । केशवः = विष्णुः । स्वपिति = शेते । इतः = अस्मिन् कोणे । एकस्मिन्प्रदेशे । तदीयद्विषां = विष्णुरिपूणां । केशवद्विषां राक्षसानाम् । कुलं = समूहः ।

१. 'शरणार्थिनः' ।

तिष्ठतीति शेषः । इतश्च = अस्मिन्प्रदेशे च । शरणार्थिनां=गृहार्थिनाम् । रक्षणार्थिनां । शिखरिणां = पर्वतानाम् । गणाः = सङ्घाः । शेरते = लम्बमानास्तिष्ठन्ति । 'शरणार्थिन' इति पाठे सङ्घविशेषणं तद्बोध्यम् । इतोऽपि= एकस्मिन् प्रदेशे । समस्तसंवर्त्तकैः=सकलप्रलयकालवह्निभिः । सह = साकम् । वडवानलः=और्वः । वाडवो वह्निः । तिष्ठतीति शेषः । अहो–आश्चर्यमेतत् । सिन्धोः = सागरस्य । वपुः=शरीरम् । विततं=विस्तृतम् । ऊर्जितं=बलवत् । भरसहञ्च = भारसहनक्षमञ्च । अस्तीति शेषः । पृथ्वी वृत्तम् ।

[ भावार्थः ] महान्तः साधूनसाधूंश्च सर्वानपि पालयन्ति, निवर्हन्ति च ।

[ कोशः ] 'केशवो माधवः स्वभूः' इत्यमरः । 'शरणं गृहरक्षित्रोः' इत्यमरः । 'सामवायस्चयो गणः' इत्यमरः । 'और्वस्तु, वाडवो वडवानलः' इत्यमरः । 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः' इत्यमरः ।

[ भाषाटीका ] देखो समुद्र के एक तरफ ( एक कोने में ) भगवान् विष्णु शयन कर रहे हैं । तो एक ओर भगवान्के शत्रु राक्षसगणभी रहते हैं । एक ओर इन्द्र के भय से शरण में आए हुए पर्वतों के समूह पड़े हुए हैं । एक ओर प्रलयकाल के भयङ्कर–अग्नियों के सहित वडवानल जल रहा है । अहो ! समुद्र का शरीर कितना विस्तृत बलशाली व भार उठाने में समर्थ है । धन्य है समुद्र की महिमा को ॥ ७७ ॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे[1] रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय[2] स्वान्गुणा-
न्कीर्तिं पालय, दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥७८॥

[ अन्वयः ] तृष्णां छिन्धि, क्षमां भज, मदं जहि, पापे रतिं मा

---

१ 'पापैः' । २ 'प्रच्छादय स्वान् गुणान्' 'प्रख्यापय प्रश्रय' 'प्रख्यापय स्वान् गुणान्' पाठ० ।

कृथाः, सत्यं ब्रूहि, साधु पदवीमनुयाहि, विद्वज्जनं सेवस्व, मान्यान्मानय, विद्विषोऽप्यनुनय, स्वान्गुणान् प्रच्छादय, कीर्तिं पालय, दुःखिते दयां कुरु [ हि ] एतत्सतां लक्षणम् [ अस्ति ]।

[ राजलक्ष्मीः ] तृष्णां=स्पृहां। छिन्धि=खण्डय। विनाशय। क्षमां=क्षान्तिम्। भज=धारय। स्वीकुरु। मदं=दर्पम्। चित्तोद्रेकम्। जहि=विनाशय। पापे=दुष्कर्मणि। पाठान्तरेपापैः=दुष्टैः। रतिम्=अनुरागम्। मा कृथाः=मा कार्षीः। सत्यं=तथ्यं। ब्रूहि=वद। साधूनां पदवीं साधुपदवीं=सज्जनपदवीम् सन्मार्गम्। अनुयाहि=अनुगच्छ। प्रतिपालय। विद्वज्जनं=पण्डितलोकम्। सेवस्व=भज। शुश्रूषस्व। मान्यान्=पूज्यान् पित्रादीन्। मानय=सत्कुरु। विद्विषोऽपि=शत्रूनपि। अनुनय=प्रसादय। प्रश्रयं=विनयम्। विश्वासं वा। प्रख्यापय=प्रकटीकुरु। कीर्त्ति-यशः। पालय=रक्ष। दुःखिते=दुःखाकुले। विपन्ने। दयां=कृपाम्। कुरु=विधेहि। (यतः) एतत्=एतदेव। सतां=साधूनाम्। चेष्टितम्=आचारः। चरितम्। सन्मार्गः। अस्तीति शेषः। शार्दूलविक्रीडितं वृत्तम्।

[ कोशः ] 'तृष्णे स्पृहापिपासे द्वे' इत्यमरः। 'दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः' इत्यमरः। 'द्विड्विपक्षाऽहिताऽमित्रदस्युशात्रवशत्रवः' इत्यमरः'। 'प्रश्रयो विनयः समौ' इति कोशः।

[ भाषाटीका ] तृष्णा को हटाओ, क्षमा धारण करो, गर्व को दूर करो, पाप में मन मत लगाओ, सच बोलो, सज्जनों के मार्ग पर चलो, गुणी व पण्डितों की सेवा करो, बड़ों की पूजा करो, हो सके तो शत्रुओं को भी प्रसन्न करो, विनय व विश्वास को बढ़ाओ, कीर्त्ति ( व इज्जत ) की रक्षा करो, दुःखी पर दया करो। क्योंकि यही सज्जनों की मर्यादा व व्यवहार है॥ ७८ ॥

**मनसि वचसि काये पुण्यपीयूषपूर्णा-**
**स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।**

परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥७९॥

[ अन्वयः ] मनसि वचसि काये पुण्यपीयूषपूर्णाः, उपकारश्रेणिभिः त्रिभुवनम् प्रीणयन्तः, परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्तः कियन्तः सन्ति ? ॥

[ विग्रहः ] पुण्यं च तत् पीयूषञ्च पुण्यपीयूषं, तेन पूर्णाः । पक्षे पुण्यमेव पीयूषमिति विग्रहः। परेषां गुणानां परमाणवः–परगुणपरमाणवः, तान् । उपकारस्य श्रेणयः–उपकारश्रेणयः । ताभिः

[ राजलक्ष्मीः ] मनसि = चित्ते । वचसि = वाण्याम् । काये=शरीरे च । पुण्यपीयूषपूर्णाः=पवित्रसुधापूर्णाः । पुण्यरूपसुधाभृतश्च । किञ्च–उपकारश्रेणिभिः=उपकारपंक्तिभिः । उपकारपरम्पराभिः । त्रिभुवनं = त्रैलोक्यम् । प्रीणयन्तः=प्रसन्नतां नयन्तः । उपकुर्वन्तः । परगुणपरमाणून् = परकीयगुणलवानपि । पर्वतीकृत्य=पर्वतवद्गौरवमापाद्य । नित्यं=सदैव । निजहृदि=स्वमानसे । विकसन्तः = विलसन्तः । प्रसन्नतां वहन्तः । सन्तः=सज्जनाः । कियन्तः=किंप्रमाणकाः । सन्ति=जगति वर्त्तन्ते ? । स्वल्पा विरला एव च तादृशाः सन्तः सन्तीति भावः ।

[ कोशः ] 'पीयूषममृतं सुधा' इत्यमरः ।

[ भाषाटीका ] मन वचन व शरीर में पुण्य पवित्र अमृत से परिपूर्ण, त्रैलोक्य को भी उपकार परम्परा से उपकृत करने वाले, परकीय गुणरूपी परमाणुओं को भी पर्वत की समान बड़ा बनाकर दिखाते हुए अपने मनमें प्रसन्न होने वाले सज्जन इस जगत् में कितने हैं ? । अर्थात् बहुत थोड़े हैं ॥ ७९ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः ! ॥ ८० ॥

[ अन्वयः ] तेन हेमगिरिणा रजताद्रिणा वा किं यत्र च आश्रिताः तरवः ते तरवः एव । [ वयन्तु ] मलयमेव ( बहु ) मन्यामहे यदाश्रयेण कङ्कोलनिम्ब-कुटजा अपि चन्दनाः स्युः ॥

[ विग्रहः ] हेम्नो गिरिस्तेन हेमगिरिणा । रजतस्य अद्रिस्तेन रजताद्रिणा । यस्य आश्रयो यदाश्रयस्तेन यदाश्रयेण । कङ्कोलाश्च निम्बाश्च कुटजाश्च ते कङ्कोलनिम्बकुटजाः ।

[ राज० ] तेन=प्रसिद्धेन हेमगिरिणा=हेमाद्रिणा । सुमेरुणा । रजताद्रिणा वा=रजतगिरिणा चन्द्रपर्वतेन । कैलासपर्वतेन वा । किं=किं प्रयोजनम् । न किमपीत्यर्थः । यत्र च=यस्मिन् गिरौ च । आश्रिताः=स्थिताः । समाश्रिताः । तरवः=वृक्षाः । ते एव=तथैव । तरवः=वृक्षाः । आम्रादय आम्रादय एव नान्ये । मलयमेव=मलयाचल मेव । मन्यामहे=वयं तु वहु मन्यामहे । यदाश्रयेण=यस्य मलयस्याश्रयेण । कङ्कोलनिम्बकुटजा अपि=कङ्कोल–पिचुमन्द–शक्रपादपा अपि । चन्दनाः=चन्दनतरवः । स्युः=भवेयुः । वसन्ततिलका वृत्तम् ।

[ भावार्थः ] सज्जनसङ्गत्या असाधवोऽपि साधुतां यान्ति । अहं ! कण्टकाकीर्णाः कटवश्च कङ्कोलनिम्बादयोऽपि मलयाश्रयेण चन्दनतां वहन्ति ।

[ कोशः ] 'मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः । 'पिचुमन्दश्च निम्बः' इत्यमरः । 'कुटजः शक्रो वत्सको गिरिमल्लिका' इत्यमरः ।

[ भाषाटीका ] हम सुवर्ण (सुमेरु) पर्वत व रजत पर्वत [चन्द्रपर्वत=शामस्टेटवर्मा में] की क्या प्रशंसा करें जहाँपर उगने वाले वृक्ष उसी प्रकार वृक्ष ही रहते हैं । हम तो मलयाचल को ही बड़ा मानते हैं व उसी की प्रशंसा करते हैं जिसमें उगने वाले कङ्कोल (जङ्गली काँटेदार कङ्कल नामक वृक्ष) निम्ब ( नीम ), कुटज (कुरैया का वृक्ष जो बड़ा कडुवा होता है) आदि वृक्ष भी सब चन्दन ही हो जाते हैं ।

रत्नैर्महार्हैस्तुतुषुर्न देवा,

न भेजिरे भीमविषेण भीतिम् ।

१ 'महाब्धेः' ।

सुधां विना न प्रययुर्विरामं
न निश्चितार्थाद्विरमन्ति धीराः ॥ ८१ ॥

[ अन्वयः ] देवाः महार्हैःरत्नैर्न तुतुषुः, भीमविषेण भीतिं न भेजिरे। सुधां विना विरामं न प्रययुः। धीराः निश्चितार्थान्न विरमन्ति ॥

[ विग्रहः ] महान्ति च तानि अर्हाणि महार्हाणि, महान् अर्हः=मूल्यं येषां तानीति वा विग्रहः तैः महार्हैः। भीमं विषंभीमविषं, तेन भीमविषेण। निश्चितश्चासावर्थश्च निश्चितार्थः, तस्मात्।

[ राजलक्ष्मीः ] ( अमृतप्राप्त्यर्थं समुद्रमथनावसरे ) देवाः=सुराः। महार्हैः=महामूल्यैः। रत्नैः=मणिभिः। न तुतुषुः=नैव सन्तोषमुपययुः। भीमविषेण=भयङ्करेण गरलेन च। भीतिं=भयं। न भेजिरे=न प्रययुः। सुधाम्=अमृतं विना। विरामम्=उपशान्तिम्। न प्रययुः=न जग्मुः। विरतिं न भेजिरे। धीराः=धीरा हि। धैर्यशालिनो हि। निश्चितार्थात्=कर्त्तुं निश्चितात्कर्मणः। निर्धारितकार्यात्। न विरमन्ति=न मध्ये एवोपरमन्ति। उपजातिर्वृत्तम्।

[ भावार्थः ] धीराः कार्यमारभ्य मध्ये कथमपि न विरमन्ति।

[ कोशः ] 'पीयूषममृतं सुधा' इत्यमरः।

[ भाषाटीका ] जब देवतागण अमृत के लिए समुद्र का मथन करने लगे तो समुद्र से नाना प्रकार के बहुमूल्य रत्न पाकर भी उनको सन्तोष नहीं हुआ, भयङ्कर विष निकाला तो वे डरे भी नहीं, और जब तक अमृत नहीं मिला तब तक वे उद्योग करते ही गए। ठीक ही है—धीर ( धैर्यवान् ) लोग निश्चित किए हुए कार्य को बीच में ही नहीं छोड़ देते हैं ॥ ८१ ॥

क्वचिद्भूमौ[1] शय्या, क्वचिदपि च [2]पर्यङ्कशयनः,
क्वचिच्छाकाहारी[3], क्वचिदपि च शाल्योदनरुचिः।

१ 'क्वचित्पृथ्वीशय्याः'। २ 'पर्यङ्कशयनं'। ३ 'च्छाकाहारः'।

**क्वचित्कन्थाधारी, क्वचिदपि च दिव्याम्बरधरः ।**
**मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥८२॥**

[ अन्वयः ] क्वचिद्भूमौ शय्या, क्वचिदपि च पर्यङ्कशयनः, क्वचिच्छाकाहारी, क्वचिदपि च शाल्योदनरुचिः ( अस्ति ), क्वचित्कन्थाधारी, क्वचिदपि च दिव्याम्बरधरः [ भवति ]। कार्यार्थी मनस्वी दुःखं न गणयति, सुखं च न [ गणयति ] ॥

[ विग्रहः ] पर्यङ्कः शयनं यस्यासौ पर्यङ्कशयमनः । पर्यङ्कशयनमिति पाठे पर्यङ्क एव शयनं पर्यङ्कशयनम् । आहरति तच्छीलः आहारी । शाकस्याहारी शाकाहारी । ( शाकाहारोऽस्यास्ति शाकाहारीति वा ) । शालीनामोदनं शाल्योदनं, तत्र रुचिर्यस्यासौ शाल्योदनरुचिः । कन्थां धरति, धारयतिवा तच्छीलः कन्थाधारी । धरतीति धरः, दिव्यानि च तान्यम्बराणि दिव्याम्बराणि, तेषां धरः दिव्याम्बरधरः ।

[ राजलक्ष्मीः ] क्वचित्=क्वचिदपि । भूमौ=पृथिव्यां । शय्या=शयनम् । क्वचिदपि च=क्वचिच्च सत्यवसरे । पर्यङ्कशयनः=मञ्चकशयनः । पर्यङ्कशयनमिति क्वचित्पाठः। तदा मञ्चकशयनमित्यर्थः। क्वचित्=कुत्रचित् । शाकाहारी=पत्रपुष्पादिशाकभोजनः । क्वचिदपि च=कस्मिंश्चित्प्रदेशे च । शाल्योदनरुचिः=राजार्हशालिधान्यभक्तप्रियः । क्वचित्=कुत्रचित् देशे काले वा । कन्थाधारी=जीर्णवस्त्रखण्डनिर्मितभिक्षुप्रावरणविशेषधारी । क्वचिदपि=कुत्रचिद्देशे काले वा । दिव्याम्बरधरः=महार्हपट्टवस्त्रधरः । [ भवति । यतः ] कार्यार्थी=कार्यसिद्ध्यभिलाषी । मनस्वी=धीरः । उन्नतमनाः । दुखं=क्लेशम् । सुखञ्च=शर्म च । न गणयति=न विचारयति । किन्तु यथा कथञ्चित्स्वकार्यं साधयति । 'शिखरिणी वृत्तम्'

[कोशः] 'शयनं मञ्चपर्यङ्कपल्यङ्काः' इत्यमरः । 'पीडा बाधा व्यथा दुःखम्' इत्यमरः ।

[ भाषाटीका ] कहीं पृथ्वी पर सोता है, कहीं बढ़िया-बढ़िया पलङ्गों पर सोता है, कहीं साग-सत्तू खा कर काम चलाता है, कहीं बढ़िया-बढ़िया शालि के चावलों का भी स्वाद लेता है। कहीं कन्था ( कथरी गुदड़ी ) धारण करता है, कहीं बढ़िया २ दुशाला और रेशमी वस्त्र पहिनता है। इस प्रकार अपने कार्य की सिद्धि में लगा हुआ धैर्यशाली पुरुष सुख व दुःख को नहीं गिनता है किन्तु जैसे भी हो अपने कार्य की सिद्धि करता है ॥ ८२ ॥

ऐश्वर्यस्य विभूषणं सुजनता, शौर्यस्य वाक्संयमो,
ज्ञानस्योपशमः श्रुतस्य विनयो, वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः, क्षमा प्रभवितुर्धर्मस्य निर्व्याजता,
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ८३ ॥

[ अन्वयः ] ऐश्वर्यस्य सुजनता विभूषणं, शौर्यस्य वाक्संयमः [ विभूषणं ], ज्ञानस्य उपशमः [ विभूषणं ], श्रुतस्य विनयः [ विभूषणम् ], वित्तस्य पात्रे व्ययः [ विभूषणं ], तपसः अक्रोधः [ विभूषणम् ], प्रभवितुः क्षमा [विभूषणम्], धर्मस्य निर्व्याजता [ विभूषणम् ]। सर्वकारणमिदं शीलं सर्वेषामपि परं भूषणम् ॥

[ राजलक्ष्मीः ] ऐश्वर्यस्य = वैभवस्य । प्रभुत्वस्य । सुजनस्य भावः सुजनता=सौजन्यम् । सज्जनता । विभूषणम् = अलङ्कारः । मण्डनम् । भवतीति शेषः । शौर्यस्य=विक्रमस्य च । वाचः संयमः वाक्संयमः = वाणीनिग्रहः । अल्पमकठोरं च । भाषणम् । ( विभूषणम् ) । ज्ञानस्य= विवेकस्य । उपशमः=शान्तिः । ( विभूषणम् ) । श्रुतस्य=वेदशास्त्रस्य । विनयः=नम्रता । ( विभूषणम् ) । वित्तस्य=धनस्य । पात्रे=सत्पात्रे । व्ययः = विनियोगः । ( विभूषणम् ) । तपसः=तपश्चर्यायाश्च । न क्रोधः-अक्रोधः=क्रोधाऽभावः । ( विभूषणम् ) । प्रभवितुः=प्रभोः राज्ञः । शासकस्य । समर्थस्य । क्षमा=क्षान्तिः । ( विभूषणम् ) धर्मस्य=सुकृतस्य । निर्व्याजस्य भावः निर्व्याजता=निष्कपटता ।

छलाऽभावः। (विभूषणम्)। (किञ्च) सर्वकारणं=सकलविभूतिगुणगणादिकारणम्। इदम्=एतत्। शीलं=सदाचारस्तु। सर्वेषामपि=ऐश्वर्यादीनां सर्वेषामपि। परं=श्रेष्ठम्। उत्कृष्टम्। भूषणं=मन्डनम्। शोभाधायकम्। अस्तीति शेषः। 'शार्दूलविक्रीडितम्'।

[भवार्थः] शीलं जगति सर्वेभ्योऽपि गुणेभ्यः श्रेष्ठम्।

[भाषाटीका] ऐश्वर्य (सम्पत्ति) का भूषण सज्जनता है, पराक्रम का भूषण वाणी को रोकना (किसी को बुरी बात न कहना) है। ज्ञान का भूषण शान्ति, विद्या का विनय, धन का सत्पात्र में देना, तपका भूषण अक्रोध, सामर्थ्य व अधिकार का भूषण क्षमा, और धर्म का भूषण निश्छलता है। और पूर्वोक्त सभी गुणों का भूषण–शील है, जो सभी सम्पत्तियोंका मुख्य कारण है ॥ ८३ ॥

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु,**
**लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।**
**अद्यैव वा मरणमस्तु, युगान्तरे वा,**
**न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ८४ ॥**

[अन्वयः] नीति निपुणाः निन्दन्तु, यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु, यथेष्टं वा गच्छतु, मरणमद्यैव वा अस्तु, युगान्तरे वा अस्तु। धीराः न्याय्यात्पथः पदं न प्रविचलन्ति।

[विग्रहः] नीतौ निपुणाः–नीतिनिपुणाः। इष्टमनतिक्रम्य यथेष्टम्।

[राजलक्ष्मीः] नीतिनिपुणाः=नीतिकुशलाः। नीतितत्वविदः पण्डिताः। निन्दन्तु=निन्दां कुर्वन्तु। यदि वा=अथवा। स्तुवन्तु=स्तुतिंकुर्वन्तु। लक्ष्मीः=सम्पत्तिश्च। समाविशतु-आगच्छतु यथेष्टं वा =स्वैरं वा। गच्छतु=अपयातु च। व्यपेतु। मरणं=मृत्युः। पञ्चत्वम्। विनाशः। अद्यैव वा=अस्मिन्नेवाहनि वा। अस्तु=भवतु। युगान्तरे वा=अन्यस्मिन्युगे वा। अस्तु=भवतु। [परन्तु] धीराः=धैर्यशालिनः। न्याय्यात् = न्यायादनपेतात्। न्यायोचितात्।

पथः=मार्गात्। पदं=पदमात्रमपि ।।अणुमात्रमपि। न प्रविचलन्ति=नापसर्पन्ति। वसन्ततिलकावृत्तम्।

[भावार्थः] निन्दास्तुतिविपत्तिमरणादिभयेनापि धीरा न्याय्यं पन्थानं न त्यजन्ति।

[ भाषाटीका ]. नीति व व्यवहार के जानने वाले पण्डित लोग निन्दा करें या प्रशंसा करें, लक्ष्मी रहे चाहे जाए, आज मरे या युग ( लाखोंवर्ष ) के बाद मरें परन्तु धीर लोग उचित मार्ग से एक पैर भी इधर उधर नहीं हटते हैं ।। ८४ ।।

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः! पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ।।८५।।

[ अन्वयः ] भग्नाशस्य करण्डपिण्डिततनोः क्षुधा म्लानेन्द्रियस्य भोगिनः मुखे आखुः नक्तं विवरं कृत्वा स्वयं निपतितः। असौ ( तु ) तत्पिशितेन तृप्तः तेनैव पथा सत्वरं यातः। हे लोकाः! पश्यत। हि दैवमेव नृणां वृद्धौ क्षये कारणम्।

[ विग्रहः ] भग्ना आशा यस्यासौ भग्नाशः, तस्य भग्नाशस्य। करण्डे पिण्डिता तनुर्यस्यासौ करण्डपिण्डिततनुः, तस्य। म्लानानीन्द्रियाण्यस्यासौ म्लानेन्द्रियः, तस्य। तस्य पिशितं तत्पिशितं, तेन। त्वरया सहितं सत्वरं यथा स्यात्तथा।

[ राजलक्ष्मीः ] भग्नाशस्य=जीवितेऽपि निराशस्य। करण्डपिण्डिततनोः=वंशपिटकवर्त्तलितदेहस्य। वंशपेटाकुण्डलितवपुषः। क्षुधा=बुभुक्षया च। म्लानेन्द्रियस्य=ग्लानेन्द्रियस्य। शक्तिविकल-

१ 'पीडिततनोः'। पा० २ 'स्वस्थस्तिष्ठत' इति पाठे-हे लोकाः! यूयं स्वस्था=निश्चिन्ताः, तिष्ठत=सुखमुपविशत इत्यर्थः।

न्द्रियग्रामस्य । भोगिनः = सर्पस्य । मुखे = वदने । आखुः = मूषकः । नक्तं=रात्रौ । विवरं=छिद्रं । कृत्वा=विधाय । स्वयम्=आत्मनैव । स्वयमेव । निपतितः=समापन्नः । सम्प्राप्तः । असौ=सर्पस्तु । तत्पिशितेन=तन्मांसेन । तृप्तः=सन्तृप्तः । व्यपगतक्षुधः सन् । तेनैव = मूषककृतेन । पथा=मार्गेण । सत्वरं=त्वरितम् । यातः=बहिरपगतः । लोकाः=हे जनाः ! पश्यत=विलोकयत । हि=निश्चयेन । दैवमेव=भाग्यमेव । अदृष्टमेव । नृणां=मनुष्याणाम् । वृद्धौ=सम्पत्तौ । क्षये-विपत्तौ च । कारणं-हेतुः । 'भवती'ति शेषः । शार्दूलविक्रीडितं वृत्तम् ।

[ भावार्थः ] जगति दैवमेव वृद्धौ हानौ च हेतुः ।

[ कोशः ] 'उन्दुरुर्मूषकोऽप्याखुः' इत्यमरः । 'विवरं बिलम्' इत्यमरः । 'पिशितं तरलं मांसम्' इत्यमरः । 'दैवं दिष्टं भागधेयं भाग्यम्' इत्यमरः ।

[ भाषाटीका ] जीने से व भूख से निराश, पिटारे में किसी तरह शरीर को सङ्कुचित कर पड़े हुए, भूख से मुरझाए हुए किसी एक सांप के मुख में चूहा अपने आप ही पिटारी को छेदकर आकर गिरा । और वह सांप उसके मांस से पेट भर कर उसी रास्ते से तुरन्त निकल गया । अतः देखो भाई ! मनुष्य की उन्नति ( लाभ ) और हानि में भाग्य ही कारण है और कुछ नहीं ॥ ८५ ॥

**आलस्यं[1] हि मनुष्याणां शरीरस्थो महान् रिपुः ।**
**नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति ॥ ८६ ॥**

[ अन्वयः ] हि आलस्यं मनुष्याणां शरीरस्थो महान् रिपुः । उद्यमसमो बन्धुर्नास्ति, यं कृत्वा नाऽवसीदति ॥

---

१ इतः पूर्वम्—पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः । प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ८६ ॥ इति श्लोकः क्वचित् दृश्यते । कराघातैःपातितोऽपि कन्दुकः उत्पयत्येव=उद्गच्छत्येव । उपरिगच्छत्येव । अतः—साधुवृत्तानां=सुशीलानां विपत्तयः, प्रायेण=बाहुल्येन, अस्थायिन्यः=अचिरस्थायिन्यो भवन्तीति तदर्थो बोध्यः ।

[ विग्रहः ] अलसस्य भावः आलस्यम् । शरीरे तिष्ठतीति शरीरस्थः । उद्यमेन समः–उद्यमसमः । कुरुते इति कुर्वाणः ।

[ राजलक्ष्मीः ] हि=निश्चयेन । आलस्यम्=अलसतैव । निरुद्योग एव । सुखासिकैव खलु । मनुष्याणां=नराणाम् । शरीरस्थः=देहस्थः । महान्=प्रबलः । रिपुः=शत्रुः । अस्ति । उद्यमसमः=उद्योगतुल्यश्च । बन्धुः=बान्धवः । सुहृत् । नास्ति=न विद्यते । ( यतः ) कुर्वाणः=उद्योगभाक् । कार्यं कुर्वन् । नावसीदति=नावसन्नो भवति । न विपद्यते । न दुःखमनुभवति ।

[ भावार्थः ] आलस्यं पुंसां रिपुरुद्योग एव च सुहृत् । यत उद्योगी किञ्चिदपि कुर्वाणो न विपद्यते । अलसश्च परिभूयते ।

[ कोशः ] 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः ।

[ भाषाटीका ] मनुष्य का आलस्य से बढ़कर कोई शत्रु नहीं है । और उद्योग से बढ़कर कोई मित्र नहीं है। उद्योगी मनुष्य कभी कष्ट नहीं पाते हैं ॥८६॥

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न विप्लुता[1] लोके ॥८७॥

[ अन्वयः ] तरुः छिन्नोऽपि [ पुनः ] रोहति, चन्द्रः क्षीणोऽपि पुनरुपचीयते इति विमृशन्तः सन्तो लोके विप्लुता अपि न सन्तप्यन्ते ।

[ राजलक्ष्मीः ] तरुः=वृक्षः । छिन्नोऽपि=संछिन्नोऽपि । कृत्तोऽपि । रोहति=पुनरुद्भवति । चन्द्रः=चन्द्रमाः । क्षीणोऽपि=अमावस्यायां क्षयमापन्नोऽपि । पुनः=पुनरपि । उपचीयते=वर्द्धते । इति=इत्येवम् । विमृशन्तः=परामृशन्तः । विचारयन्तः । सन्तः=सज्जनाः । लोके=जगति । विप्लुताः=विपन्ना अपि । न सन्तप्यन्ते=खिद्यन्ते । नावसीदन्ति । न दुःखिता भवन्ति । आर्या जातिः ।

---

१ 'सन्तप्यन्ते न ते विपदा' । 'सन्तप्यन्ते न लोकेषु' ।

[ कोशः ] 'विटपी पादपस्तरुः' इत्यमरः ।

[ भाषाटीका ] काटा गया भी वृक्ष कुछ कालके बाद फिर उग आता है, चन्द्रमा अमावस्याको क्षीण होकर भी पुनः बढ़ता है। ऐसा विचार करके सज्जन लोग विपत्ति में धैर्य धारण करते हैं और विपत्ति व दुःख से विचलित नहीं होते ॥ ८७ ॥

नेता यस्य बृहस्पतिः, प्रहरणं वज्रं, सुराः सैनिकाः,
स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो[1] वारणः ।
इत्यैश्वर्यबलान्वितोऽपि[2] बलभिद्भग्नः परैः सङ्गरे,
तद्युक्तं[3] ननु दैवमेव शरणं, धिग्धिग्वृथा पौरुषम् ॥८८॥

[ अन्वयः ] यस्य नेता बृहस्पतिः, प्रहरणं वज्रं, सुराः सैनिकाः, दुर्गं स्वर्गः, हरेरनुग्रहः किल, वारणः ऐरावतः—इत्यैश्वर्यबलान्वितोऽपि बलभित् परैः सङ्गरे भग्नः । तत् युक्तं दैवमेव शरणं, पौरुषं वृथा धिक् धिक् ।

[ राजलक्ष्मीः ] यस्य=इन्द्रस्य । नेता=उपदेष्टा मन्त्री नायकः । बृहस्पतिः=सुरगुरुः । प्रहरणम्=आयुधम् । वज्रं=कुलिशम् । सुराः=अमराः । सैनिकाः=योद्धारः । दुर्गं=कोट्टम् । स्वर्गः = नाकः । हरेः=विष्णोश्च । अनुग्रहः = कृपा । किलेति प्रसिद्धौ । वारणः=गजः । ऐरावतः = सुरगज ऐरावतः । इति=इत्येवम् । ऐश्वर्यञ्च बलञ्च ऐश्वर्यबले, ऐश्वर्यबलाभ्यामन्वितः —ऐश्वर्यबलान्वितोऽपि=दिव्यवैभवसैन्यबलसंयुतोऽपि । बलभित्=इन्द्रः । यत्–परैः=शत्रुभिर्दैत्यदानवैः । सङ्गरे=युद्धे । भग्नः=पराजितः । तत्=तस्मात् । युक्तम्=उचितम् । व्यक्तमिति पाठे स्पष्टमित्यर्थः । दैवमेव=भाग्यमेव । शरणं=संरक्षकम् । प्रधानम् । पौरुषं=बलन्तु । वृथा=निरर्थकमेव । धिक्धिक्=पौरुषञ्च धिक् धिक् । तस्य निन्देत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

---

१ 'रैरावणः' । २ 'इत्याश्चर्यबलान्वितोऽपि' पा० ।
३ 'तद्युक्तं । वरमेव दैवशरणं' । 'तद्व्यक्तं' ।

[ भावार्थः ] सर्वतोभावेन बलवानिन्द्रोऽपि सुरारिभिर्जितोऽतो दैवमेव बलवत्। पौरुषं धिक्।

[कोशः] 'ऐरावतोऽभ्रमातङ्गैरावणाऽभ्रमुवल्लभाः' इत्यमरः। 'ह्रादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः' इत्यमरः। 'शरणं गृहरक्षित्रोः' इत्यमरः।

( भाषाटीका ) बृहस्पति ऐसे नीति के आचार्य महान् पण्डित जिसके मन्त्री, वज्र-आयुध, देवता लोग सैनिक, स्वर्ग-किला, भगवान् विष्णु की पूर्ण कृपा, ऐरावत हाथी, इस प्रकार अद्भुत ऐश्वर्य व बलान्वित भगवान् महेन्द्र भी युद्ध में दैत्य दानवों से परास्त हो गए। तब ( इसलिए ) दैव ( अदृष्ट ) ही प्रधान है पुरुषार्थ ( बल पराक्रम ) कोई चीज नहीं है। अतः पुरुषार्थ को धिक्कार है अर्थात् दैव अनुकूल न हो तो सभी पराक्रम व्यर्थ है ॥ ८८ ॥

**कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।**
**तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ८९ ॥**

[ अन्वयः ] [ यद्यपि ] पुंसां फलं कर्मायत्तं, बुद्धिः कर्मानुसारिणी [ भवति ], तथापि सुधिया सुविचार्यैव कुर्वता भाव्यम्।

[ विग्रहः ] कर्मण आयत्तं—कर्मायत्तम्। कर्म अनुसरति तच्छीला कर्मानुसारिणी।

[ राजलक्ष्मीः ] [ यद्यपि- ] पुंसां=पुरुषाणाम्। फलं=फलसिद्धिः। कर्मायत्तं=प्रारब्धाधीनम्। कर्मपरतन्त्रम्। बुद्धि=मतिरपि। कर्मानुसारिणी=कर्मपराधीना। प्रारब्धाधीना। भवतीति शेषः। तथापि=एवमपि। [ दैवस्य कर्मणश्च दुर्ज्ञेयत्वात्- ] सुधिया=विदुषा। सुविचार्यैव=नितरां विचार्यैव। सुनिश्चित्यैव। कुर्वता=कुर्वाणेन। कार्यकारिणा। भाव्यं=भवितव्यम्।

[ भावार्थः ] दैवस्य सर्वथा प्रबलत्वेऽपि कर्मणः-प्रारब्धाख्यस्य दैवस्य-दुर्ज्ञेयतया पुंसा सुविचार्यैव कर्म कर्त्तव्यम्।

[ कोशः ] 'अधीनो निघ्न आयत्तः' इत्यमरः।

[ भाषाटीका ] यद्यपि मनुष्यों को भाग्यानुसार ( कर्मानुसार ) ही फल मिलता है, और प्रारब्ध ( भाग्य ) अनुसार ही बुद्धि भी होती है परन्तु बुद्धिमान् मनुष्य को खूब पूर्वापर सोच विचार कर ही कार्य करना चाहिए। क्योंकि 'हमारे अदृष्ट में क्या है' यह पहिले ही कोई कैसे जान सकता है ? ॥ ८९ ॥

खल्वाटो दिवसेश्वरस्य किरणैः [1]सन्तापितो मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य[2] मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः,
प्रायो गच्छति यत्र [3]भाग्यरहितस्तत्रैव यान्त्यापदः ॥ ९० ॥

[ अन्वयः ] खल्वाटो दिवसेश्वरस्य किरणैः मस्तके सन्तापितः अनातपं देशं वाञ्छन् विधिवशात्तालस्य मूलं गतः । तत्रापि पतता महाफलेन अस्य शिरः सशब्दं भग्नं, प्रायो यत्र भाग्यरहितो गच्छति तत्रैव आपदो यान्ति ॥

[ विग्रहः ] दिवसस्येश्वरः दिवसेश्वरः, तस्य । नास्त्यातपो यत्रासौ अनातपः, तम् । विधेर्वशः-विधिवशः, तस्मात् । महच्च तत्फलं च महाफलम् । तेन । शब्देन सहितं यथा स्यात्तथा । भाग्येन रहितः भाग्यरहितः ।

[ राजलक्ष्मीः ] खल्वाटः=खलतिः । निष्केशशिराः पुमान् । दिवसेश्वरस्य = दिननाथस्य सूर्यस्य । किरणैः-मयूखैः । मस्तके=शिरसि । सन्तापितः=पीडितः । घर्मार्दितः सन्निति यावत् । अनातपं=घर्मसन्तापरहितम् । छायान्वितम् । देशं = कमपि प्रदेशम् । वाञ्छन् = इच्छन् सन् । विधिवशात्=दैवात् । दैवायत्तः । तालस्य=तालवृक्षस्य । मूलं= तलप्रदेशम् । अधोदेशम् । गतः=यातः । प्राप्तः । तत्रापि = तालाधःप्रदेशेऽपि । पतता=समापतता । तालाद्भ्रश्यता । महाफलेन=महता तालफलेन । सशब्दं = सोच्चैःशब्दम् । चटत्कारेणेति यावत् । शिरः = मस्तकम् । भग्नं = स्फुटितम् । आहतम् । प्रायः=बाहुल्येन । यत्र = यत्र देशे ।

---

१ 'सन्ताडितो' । २ 'द्रुतगतिस्तालस्य' । ३ 'दैवहतकस्तत्रैव' ।

भाग्यरहितः=सौभाग्यविकलः । दुर्भगः गच्छति=याति । तत्रैव= तत्रैव प्रदेशे । आपदः=विपत्तयोऽपि । यान्ति=गच्छन्तीव । शार्दूलविक्रीडितं वृत्तम् ।

[ भावार्थः ] दुर्दैवहतको यत्र यत्र प्रयाति तत्रैवापदोऽपि, हा हन्त ! सहैव यान्ति ।

[ कोशः ] 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः । 'विधिर्विधाने दैवेऽपि' इति कोशः ।

[ भाषाटीका ] एक खल्वाट ( गंजा मनुष्य ) मध्याह्न में सूर्य की तेज किरणों से सन्तप्त हो किसी छायायुक्त स्थान को खोजता हुआ दैववशात् ताड़ के वृक्ष के नीचे चला गया। वहाँ भी एक बड़ा सा ताड़ का फल ऊपर टूटकर उसके शिर पर बड़े जोर से ( तड़ाक से ) गिरा, और उस बेचारे का सिर फूट गया। ठीक है, जहाँ २ निर्भागी पुरुष जाता है वहीं विपत्ति भी मानों उसके साथ ही जाती है ॥ ९० ॥

दैवस्य बलवत्त्वं भूयोऽपि दर्शयति––

[1]शशिदिवाकरयोर्ग्रहपीडनं[2]
गजभुजङ्गमयोरपि बन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां
विधिरहो ! बलवानिति मे मतिः ॥ ९१ ॥

[ अन्वयः ] शशिदिवाकरयोः ग्रहपीडनं, गजभुजङ्गमयोरपि बन्धनं, मतिमतां च दरिद्रतां विलोक्य अहो ! विधिः बलवानिति मे मतिः भवति ।

[ विग्रहः ] शशी च दिवाकरश्च शशिदिवाकरौ, तयोः । ग्रहेण पीडनं–– ग्रहपीडनम् । तत् । गजश्च भुजङ्गमश्च गजभुजङ्गमौ, तयोः गजभुजङ्गमयोः । प्रशस्तं बलमस्त्यस्य बलवान् ।

[ राजलक्ष्मीः ] शशिदिवाकरयोः=चन्द्रसूर्ययोः । ग्रहपीडनं=

१ 'रविनिशाकर' । २ 'गजभुजङ्गविहङ्गमबन्धनं शशिदिवाकरयोर्ग्रहपीडनं' पा० ।

राहुपीडाम् ।। विलोक्येति शेषः । गजभुजङ्गमयोरपि=हस्तिसर्पयोरपि । बन्धनं=नियमनम् । विलोक्येति शेषः मतिमतां च=बुद्धिमताञ्च । दरद्रतां=दारिद्र्यम् । विलोक्य=दृष्ट्वा । अहो इत्याश्चर्ये । विधिः=नियतिः । दैवम् । बलवान्=प्रबलः । इति=इत्येवम् । मे=मम । मतिः=बुद्धिः । भवतीति शेषः । द्रुतविलम्बितं वृत्तम् ।

[ भावार्थः ] सूर्यस्य चन्द्रमसश्च गगने राहुणा ग्रहणं दृष्ट्वा, गजादीनां च बन्धनं दृष्ट्वा दैवं बलवदिति निश्चिनोमि ।

( कोशः ) 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः ।

[ भाषाटीका ] चन्द्रमा व सूर्य का ग्रहण होता देखकर, हाथी व सांप का पकड़ा जाना देखकर, पण्डितों की दरिद्रता देखकर, दैव ( भाग्य ) ही बलवान् है--यही मेरा पक्का विचार होता है ॥ ९१ ॥

सृजति तावदशेषगुणाकरं
पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चे
दहह ! कष्टमपण्डितता विधेः ॥ ९२ ॥

( अन्वयः ) ( विधिः ) अशेषगुणाकरं भुवः अलङ्करणं पुरुषरत्नं तावत् सृजति, तदपि तत्क्षणभङ्गि करोति चेत् अहह ! विधेः अपण्डितता । कष्टम् ।

( विग्रहः ) अशेषाश्च ते गुणाश्च अशेषगुणाः, तेषामाकरः—अशेषगुणाकरः, तम् । पुरुषेषु रत्नं-पुरुषो रत्नमिव वा-पुरुषरत्नम् । तत् । भङ्गोऽस्यास्तीति भङ्गि, तत्क्षणेन भङ्गि-तत्क्षणभङ्गि । तत् । अपण्डितस्य भावः—अपण्डितता ।

[ राजलक्ष्मीः ] ( विधिः=विधाता ) । अशेषगुणाकरं=निखिलगुणगणाकरम् । सकलगुणान्वितम् । भुवः=पृथिव्याः । अलङ्करणम्=भूषणम् । अलङ्कारभूतम् । पुरुषरत्नं=पुरुषश्रेष्ठम् । तावत्=आदौ कथञ्चित् ।

सृजति=निष्पादयति । तदपि=तदपि पुरुषरत्नम् । तत्क्षणभङ्गि=उत्पत्तिक्षणमात्रभङ्गुरम् । सद्योविनाशि । करोति - विधत्ते । चेत्=यदि । अहह=इति खेदे । विधेः=ब्रह्मणः । अपण्डितता=मौर्ख्यम् । जाड्यम् । अविवेकिता । कष्टं=दुःखम् । दुःखजनकम् । 'द्रुतविलम्बितं वृत्तम्' ।

( भावार्थः ) योग्यं पुरुषमुत्पाद्य ब्रह्मा तं तत्क्षणमेव ( सद्य एव, शतेनैव वर्षाणां वा ) हन्तीति विधेरहो ! जाड्यम् ।

( कोशः ) 'खनिः स्त्रियामाकरः स्या' दित्यमरः ।

[ भाषाटीका ] पहिले ब्रह्माजी ( विधाता ) सम्पूर्ण गुणों से अलंकृत पुरुषरत्न को अपने हाथसे किसी प्रकार बनाते हैं फिर भी उसे तुरन्त ही ( सौ पचास वर्षों में ही ) नष्ट होने ( वाला बना ) देते हैं—यह ब्रह्माजी की बडी अनीति है । और यह बड़े दुःख व कष्ट की बात है ॥ ९२ ॥

**पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं,**
**नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।**
**धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं,**
**यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥ ९३ ॥**

( अन्वयः ) यदा करीरविटपे पत्रं नैव ( तर्हि ) वसन्तस्य दोषः किं ? । यदि उलूको दिवापि न अवलोकते ( तर्हि ) सूर्य्यस्य किं दूषणं । यदि चातकमुखे धाराः नैव पतन्ति ( तर्हि ) मेघस्य किं दूषणं । यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ! ॥

( विग्रहः ) करीरस्य विटपः, करीरविटपः, तस्मिन् । चातकस्य मुखं, चातकमुखं, तस्मिन् । ललाटे लिखितं ललाटलिखितम् ।

[ राजलक्ष्मीः ] यदा=यदि । करीरविटपे=मरुदेशोद्भवक्करारूयपादपे । पत्रं=दलं । नैव=नैवास्ति तर्हि । वसन्तस्य=कुसुमाकरस्य ! दोषः=अपराधः । किं=किमस्ति । नैवेत्यर्थः । यदि=यदा । उलूकः=दिवान्धः । दिवाऽपि=दिनेऽपि । नावलोकते=न पश्यति । तर्हि । सूर्यस्य=दिनकरस्य । किं दूषणं=कोऽपराधः । न कोपीत्यर्थः ।

नैवे'त्येवं काकाऽपि केचिद्योजयन्ति । एवमग्रेऽपि । (यदि) चातकमुखे=सारङ्गाख्यपक्षिचञ्चौ । धाराः=मेघजलधाराः । नैव=न खलु । पतन्ति=निपतन्ति । तर्हि । मेघस्य=धाराधरस्य । जलधरस्य । किं दूषणं=न कोऽपीत्यर्थः । यत् = यदेव हीनमुत्तमं वा । पूर्वम् = आदौ । जन्मसमय एव । विधिना=ब्रह्मणा । ललाटलिखितं=भाले लिखितं । तत्=विधिलिखितम् । मार्जितुं=परिमार्जितुम् । अन्यथयितुम् । प्रोञ्छितुम् । कः=को वा । क्षमः=कुशलः । शक्तः ?ः न कोऽपीत्यर्थः । शार्दूलविक्रीडितम् ।

[ भावार्थः ] यद्धात्रा भाले लिखितं तदन्यथाकर्तुं न कोऽपि शक्तः ।

[ कोशः ] करीरे तु, क्रकरग्रन्थिलावुभौ' इत्यमरः । 'उलूकेतु वायसाऽरातिपेचकौ । दिवान्धः कौशिको घूको दिवाभूतो निशाटनः' इत्यमरः । 'विस्तारो 'विटपोऽस्त्रियाम्' इत्यमरः । 'ललाटमलिकं गोधिः' इत्यमरः ।

[ भाषाटीका ] यदि करीर ('कैर' 'टींट') वृक्ष में पत्ते न उत्पन्न हो तो वसन्त का इसमें दोष है क्या ? (करीर वृक्ष में टहनी व कांटे ही होते हैं, पत्ते नहीं । ) यदि उल्लू को दिन में भी दिखाई न दे तो इसमें सूर्य का क्या दोष है ? । यदि जल की धारा चातक के मुख में न जाएं तो मेघ का क्या दोष है ? । ठीक है—जो ब्रह्मा जी ( विधाता ) ने भाग्य में लिख दिया है उसे कौन मिटा सकता है ? ॥ ९३ ॥

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा,
विधिर्वन्द्यः, सोऽपि प्रतिनियत कर्मैक फलदः ।
फलं कर्मायत्तं किममरगणैः, किं च विधिना,
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥९४॥

[ अन्वयः ] देवान् नमस्यामः । ननु तेऽपि हतविधेः वशगाः । विधिर्वन्द्यः,

सोऽपि प्रतिनियतकर्मैक फलदः । यदि फलं कर्मायत्तम्,तर्हि अमरैः किं, विधिना च किं, तत्कर्मभ्योनमः येभ्यो विधिरपि न प्रभवति ॥

[ विग्रहः ] हतश्चासौ विधिश्च हतविधिः, तस्य । वशं गच्छतीति वशगः । प्रतिनियतानि कर्माणि प्रतिनियतकर्माणि, तेषामेव एकं ( केवलं ) यत्फलं, तद्ददातीति—प्रतिनियत कर्मैक फलदः । कर्मण आयत्तं कर्मायत्तम् ।

[ राजलक्ष्मीः ] वयं देवान् = सुरान् । नमस्यामः = नमस्कुर्मः । स्वनिर्धारितं स्वयमेव खण्डयति–नन्विति । ननु=निश्चयेन । तेऽपि= देवा अपि हतविधेः=दग्धदैवस्य । क्रूरस्य ब्रह्मणः । वशगाः=आधीनाः तत्पराधीनाः । सन्तीति शेषः । ( तर्हि ) विधिः=देवानामपि नियन्ता ब्रह्मैव । वन्द्यः=पूज्यः ॥ सोऽपि = विधिरपि । प्रतिनियतकर्मैकफलदः= तत्तन्निश्चितकर्मफलप्रदः । तत्तद्रूपेण निश्चितानां कर्मणामेव तदनुरूपेण फलदः । यदि – फलं=तत्तत्कर्मफलञ्च । कर्मायत्तं = प्रतिनियत कर्माधीनम् । तर्हि । अमरैः = देवैः । किं = किं प्रयोजनम् ? । विधिना च किम् = ब्रह्मणा च किम् । न किमपि प्रयोजनमित्यर्थः । तत् = तस्मात् सर्वप्रधानत्वात् । कर्मभ्यः=स्वकृतपापपुण्यकर्मभ्य एव । नमः=नमोऽस्तु । येभ्यः = कर्मभ्यः । विधिरपि = ब्रह्माऽपि । न प्रभवति = नईष्टे । यान्यन्यथयितुं ब्रह्माऽपि न समर्थो भवति । शिखरिणी वृत्तम् ।

[ भावार्थः ] स्वविहितशुभाऽशुभकर्माण्येव प्रबलानि, न तान्यन्यथाकर्त्तुं ब्रह्माऽपि प्रभुः ।

[ कोशः ] 'विधिर्विधाने दैवेऽपि' इति कोशः ।

[ भाषाटीका ] हम इन्द्र आदि देवताओं को प्रणाम करेंगे । परन्तु वे तो विधि (ब्रह्मा) के आधीन हैं । अच्छा तो विधि को ही हम प्रणाम करेंगे । परन्तु विधि भी कर्मानुसार निश्चित फल को ही देते हैं । यदि फल कर्माधीन है तो फिर देवताओं व ब्रह्मा से क्या प्रयोजन है, कर्म ही बड़े हैं अतः उनको ही हम प्रणाम करते हैं । क्योंकि किए हुए कर्मों ( पाप पुण्य ) को ब्रह्मा भी नहीं हटा सकते ॥ ९४ ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे[1]
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः,[2]
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥९५॥

[ अन्वयः ] येन ब्रह्मा ब्रह्माण्डभाण्डोदरे कुलालवन्नियमितः, येन विष्णुः दशावतारगहने महासङ्कटे क्षिप्तः, येन रुद्रः कपालपाणिपुटके भिक्षाटनं कारितः । ( येन ) सूर्यो नित्यमेव गगने भ्राम्यति । तस्मै कर्मणे नमः ॥

[ विग्रहः ] कुलाल इव कुलालवत् । ब्रह्माण्डमेव भाण्डं ब्रह्माण्डभाण्डं, तस्य उदरं ब्रह्माण्डभाण्डोदरम् । तस्मिन् । दशभिः अवतारैः गहनं दशावतारगहनं, तस्मिन् । दशावतारा एव गहनमिति वा । महच्च तत्सङ्कटश्च महासङ्कटं, तस्मिन् । कपालमेव पाणिपुटकं ( करतलगतभिक्षापात्रम् )—कपालयुतं वा पाणिपुटकं कपालपाणिपुटकं, तस्मिन् । भिक्षायै अटनं भिक्षाटनम् । तत् ।

[ राजलक्ष्मीः ] येन = कर्मणा । अदृष्टेन । ब्रह्मा=विधाता । ब्रह्माण्डभाण्डोदरे=निखिलजगदण्डभाण्डमध्ये । ब्रह्माण्डरूपमृत्पात्रनिर्माणकार्ये इति यावत् । कुलालवत्=कुम्भकारवत् । नियमितः = नियन्त्रितः । व्यापारितः । येन=कर्मणा च । विष्णुः=नारायणः । दशावतारगहने=मत्स्यादिदशावतारधारणकठिने । महासङ्कटे=महाक्लेशप्रदे । महति कृच्छ्रे कर्मणि । क्षिप्तः=निक्षिप्तः । बलान्नियोजितः । येन=कर्मणा । रुद्रः=शिवः । कपालपाणिपुटके=कपालरूपे करगतभिक्षापात्रे । कपालयुते हस्तपुटके वा । भिक्षाटनं=भिक्षार्थमितस्ततः प्रतिगेहम् भ्रमणम् । कारितः=विधापितः । ( येन च प्रेरितः ) सूर्यः=ग्रहपतिर्दिवाकरश्च । गगने = आकाशे । नित्यमेव=सर्वदैव । भ्राम्यति=यदायत्तो भ्रमति । तस्मै=महाप्रभावाय कर्मणे=प्रारब्धकर्मणे । दैवाय वा । नमः=नमोऽस्तु । शार्दूलविक्रीडितम् ।

---

१ 'भाण्डान्तरे' इति गौडाः पठन्ति ।　२ 'सेवते' ।

[ भावार्थः ] अदृष्टेन ब्रह्मविष्णुशिवादयो नानाकष्टगहनेषु कार्येषु नियम्यन्ते। तस्माददृष्टमेव प्रबलम्।

[ कोशः ] 'कुम्भकारः कुलालः स्यात्' इत्यमरः। 'सर्वमावपनं भाण्डं पात्राऽमत्रं च भाजनम्' इत्यमरः। 'सङ्कटं ना तु सम्बाधे' इत्यमरः। 'गहनं वनदुःखयोः। गह्वरे कलिले चाऽपि' इति हैमः।

[ भाषाटीका ] जिसने ब्रह्माजी को ब्रह्माण्डरूपी बर्त्तनों को बनाने के लिए कुम्हार की तरह लगा रखा है, विष्णु भगवान् को जिसने दश अवतार रूपी कठिन विपत्ति में डाल रखा है, रुद्र को जिसने हाथ में खप्पर देकर घर २ भिक्षा मँगवाई, सूर्य भी जिसके कारण नित्य आकाश में भटकता फिरता है-उस कर्म ( अदृष्ट, भाग्य ) को नमस्कार है ॥ ९५ ॥

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृताऽपि सेवा।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९६ ॥

[ अन्वयः ] ( पुरुषस्य ) आकृतिर्नैव फलित, फलं नैव, शीलं न, विद्यापि नैव, च यत्नकृतापि सेवा न ( फलति )। ( किन्तु ) पूर्वतपसा सञ्चितानि पुरुषस्य भाग्यानि काले फलन्ति खलु, यथैव वृक्षाः ( काले फलन्ति ) ॥

[ विग्रहः ] यत्नेन कृता यत्नकृता। पूर्वं च तत्तपश्च पूर्वतपः, तेन पूर्वतपसा।

[ राजलक्ष्मीः ] [ पुरुषस्य=पुंसः। ] आकृतिः=स्वरूपम्। नैव=न खलु। फलति=किमपि फलं ददाति। कुलं=वंशः। नैव=न खलु फलतीति शेषः। शीलं=सदाचारः। न=नैव फलति। विद्याऽपि=शास्त्रीयज्ञानसम्पदपि। नैव=नैव फलति। च=किञ्च। यत्नकृताऽपि। सेवाऽपि=शुश्रूषाऽपि। न=नैव फलति। किन्तु पूर्वतपसा=पूर्वजन्मार्जितेन तपसा। व्रतोपवासादिकृच्छ्रकर्मणा च। सञ्चितानि=राशीकृतानि। पुरुषस्य=पुंसः। भाग्यानि=कर्माणि। भागधेयान्येव। काले=अवसरे। फलोचिते समये। फलन्ति खलु=अवश्यं सिद्ध्यन्ति।

नूनं फलं जनयन्ति । यथैव = यथा । वृक्षाः = अम्रादितरवः । काले फलन्ति यथेति शेषः । वसन्ततिलका वृत्तम् ।

[ भावार्थः ] पूर्वजन्मार्जितानि सुकृतानि कालेऽवश्यमेव फलन्ति, नाकृत्यादयो गुणाः फलन्ति ।

[ कोशः ] 'आकाराविङ्गिताकृती' इत्यमरः । 'दैवं दिष्टं भागधेयं भाग्यम्' इत्यमरः ।

[ भाषाटीका ] पुरुष का न तो सुन्दर रूप फल देता है, न श्रेष्ठकुल, न सदाचार, न विद्या, न परिश्रम से की गई सेवा ही फलती है । किन्तु पूर्वजन्म में किए गए व्रत, उपवास, दान, धर्म आदि से सञ्चित किया हुआ जो अदृष्ट [ पुण्य, भाग्य ] है वही समय पाकर अवश्य फल देता है जैसे ऋतु आने पर वृक्ष फल देते हैं ॥ ९६ ॥

वने रणे शत्रुजलाग्निमध्ये,
महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा ,
रक्षन्ति पुण्यानि पुराकृतानि ॥ ९७ ॥

[ अन्वयः ] पुरा कृतानि पुण्यानि वने रणे शत्रुजलाग्निमध्ये, महार्णवे पर्वतमस्तके वा सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति ।

[ विग्रहः ] शत्रवश्च जलं च अग्निश्च शत्रुजलाग्नयः, तेषां मध्यं शत्रुजलाग्निमध्यं, तस्मिन् । पर्वतस्य मस्तकं पर्वतमस्तकं, तस्मिन् । विषमे स्थितः विषमस्थितः तम् ।

[ राजलक्ष्मीः ] पुराकृतानि = पूर्वं कृतानि । जन्मान्तरोपार्जितानि । पुण्यानि = सुकृतानि । वने = अरण्ये । रणे = युद्धे । शत्रुजलाग्निमध्ये = रिपुतोयपावकमध्ये । महांश्चासावर्णवश्च तस्मिन्-महार्णवे = समुद्रे । पर्वतमस्तके वा = पर्वतशिखरे वा । गिरिसङ्कटे वा सुप्तं =

निद्रितम् । प्रमत्तम्=असावधानम् । विषमस्थितं वा=सङ्कटप्रदेशस्थितं । सङ्कटमापन्नं वा । पुमांसमिति शेषः । रक्षन्ति=पालयन्ति । तस्य मर्माणि रक्षन्ति । उपजातिर्वृत्तम् ।

[ भावार्थः ] सङ्कटे रोगे महार्णवे युद्धे वा पूर्वोपार्जितानि पुण्यानि अदृष्टाख्यानि पुमांसं रक्षन्ति ।

[ कोशः ] 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः ।

[ भाषाटीका ] जङ्गल में, युद्ध में, शत्रुओं के जल के और अग्नि के बीच में, समुद्र में या पर्वत की चोटी पर भी सूते हुए असावधान, सङ्कट की जगह में बैठे हुए मनुष्य की भी पूर्वोपार्जित पुण्य ( भाग्य अदृष्ट ) ही रक्षा करते हैं ॥ ९७ ॥

या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं,
हे साधो ! व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥

[ अन्वयः ] हे साधो ! वाञ्छितं फलं भोक्तुं तां सत्क्रियामाराधय, या च खलान् साधून् करोति, मूर्खान् विदुषः करोति, द्वेषिणो हितान् करोति, परोक्षं प्रत्यक्षं कुरुते, तत्क्षणात् हालाहलम् अमृतं कुरुते । व्यसनैः विपुलेषु गुणेषु आस्थां वृथा मा कृथाः ।

[ राजलक्ष्मी ] हे साधो=हे सत्पुरुष । वाञ्छितम्=अभीष्टं । फलं=कार्यसाफल्यम् । कार्यसिद्धिम् । भोक्तुम्=आसादयितुम् । उपभोक्तुम् । तां=प्रसिद्धाम् । भगवतीं = ऐश्वर्यादिगुणगणालङ्कृताम् । सत्क्रियां=शोभनं कर्म । पुण्यम् । आराधय=सेवस्व । या च=या हि सत्क्रिया । खलान्=दुर्जनान् । दुष्टान् । साधून्=सज्जनान् । करोति=विधत्ते । यद्वा–साधून् खलान् करोतीत्यप्यन्वयः । एवमग्रेऽपि सर्वत्र बोध्यम् । मूर्खान्=जडान् । विदुषः=पण्डितान् । ( करोति=विधत्ते ) । द्वेषिणः=वैरिणः । रिपून् । हितान्=हितैषिणः । मित्राणि ।

सुहृदः । [ करोति = निष्पादयति ] । परोक्षम् = अप्रत्यक्षम् । प्रत्यक्षं = चक्षुर्गोचरं । कुरुते = सम्पादयति । हालाहलं = गरलम् । तत्क्षणात् = सद्य एव । सहसैव । तस्मिन्नेव क्षणे । अमृतं = पीयूषं । कुरुते । व्यसनैः = विपत्तिभिः । विपुलेषु = विस्तीर्णेषु । व्यसनप्रायेषु । दुर्लभेषु । गुणेषु = विद्वत्त्वादिषु । वृथा = मुधैव । व्यर्थमेव । आस्थां = प्रत्यत्नम् । श्रमम् । मा कृथाः = मा कार्षीः । शार्दूलविक्रीडितम् ।

[ भावार्थः ] सत्कर्मणा [ पुण्येन ] शत्रवोऽपि मित्रतां यान्ति । विषमप्यमृतं भवति । अतस्तदेव सत्कर्म कुरु, तद्विना हि सर्वे गुणा वृथैव सन्ति ।

[ कोशः ] 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः । 'आस्थानीयत्नयोरास्था' इत्यमरः । 'पीयूषममृतं सुधा' इत्यमरः ।

[ भाषाटीका ] हे सज्जन ! यदि तुम उत्तम फल भोगना चाहते हो तो उस सत्क्रिया ( सत्कर्म ) का आश्रयण करो जिससे दुष्ट लोग भी सज्जन बन जाते है, मूर्ख भी पण्डित हो जाते है, शत्रु भी मित्र हो जाते हैं, परोक्ष वस्तु भी तत्क्षण ही प्रत्यक्ष हो जाती है, विष भी अमृत हो जाता है । नाना विघ्न बाधाओं से कठिन लम्बे चौड़े गुणों में विश्वास कर वृथा कालक्षेप मत करो । अर्थात् सत्कर्म के विना सब गुण व्यर्थ हैं ।। ९८ ।।

गुणवदगुणवद्वा कुर्वता [1]कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामा विपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ।। ९९ ।।

[ अन्वयः ] गुणवत् अगुणवत् वा कार्यजातं कुर्वता पण्डितेन यत्नतः परिणतिः अवधार्या, अतिरभसकृतानां कर्मणां शल्यतुल्यो विपाकः आ विपत्तेः हृदयदाही भवति ।

---

१ 'कार्यमादौ' ।

[ विग्रहः ] गुणाः सन्त्यत्र गुणवत् । तत् । न गुणवत् अगुणवत् । तत् । कार्याणां जातं कार्यजातम् । तत् । अतिरभसेन कृतानि अतिरभसकृतानि, तेषाम्-अतिरभसकृतानाम् । शल्येन तुल्यः शल्यतुल्यः । हृदयं दहति तच्छीलः हृदयदाही ।

( राजलक्ष्मीः ) गुणवत्=सगुणम् । शोभनम् । अगुणवद्वा=गुण-रहितं वा । दुष्टम् । अशोभनम् । कार्यजातं=नानाविधानि कार्याणि । कार्यसमूहम् । कुर्वता=सम्पादयता । पण्डितेन=विदुषा । परिणतिः॥ परिणामः । फलम् । फलस्यापि परिणामश्च । यत्नतः=प्रयत्नेन । आदावेव । अवधार्या=निर्णेया । निश्चेया । ( यतः ) अतिरभसकृता-नाम्=अतित्वराकृतानाम् । अविचार्य कृतानाम् । कर्मणां=कार्याणाम् । शल्यतुल्यः=अन्तर्निविष्टशङ्कसदृशः । विपाकः=परिणामः । परिपाकः । फलम् । आ विपत्तेः=विपत्तिपर्यन्तम् । पक्षे मरणपर्यन्तमिति बोध्यम् । मरणपर्यवसायीति यावत् । हृदयदाही=चेतोविदाही । भवति=जायते । मालिनी वृत्तम् ।

[ भावार्थः ] शुभस्याऽशुभस्य वा कर्मणः परिणामं विचार्य कार्यङ्करणीयम् । सहसाऽनुष्ठितानां कर्मणां विपाकोऽन्तर्गतशल्यवद्धृदयदाही मरणप्रदो भवति ।

[ कोशः ] 'जातं व्यक्तौघजन्मसु' इति मेदिनी । 'रभसो वेगहर्षयोः' इति हैमः ।

( भाषाटीका ) पण्डित को चाहिए कि अच्छा या बुरा काम करने से पहिले ही खूब सोच विचार उस कार्य का परिणाम समझ लेना चाहिए । सहसा ( बिना विचार के ) जो कार्य किया जाता है उसका परिणाम मर्मस्थल में प्रविष्ट शल्य ( बाण या भाले के अग्रभाग ) की तरह हृदय को जलानेवाला व मरणर्यन्त विपत्ति को देनेवाला होता है ॥ ९९ ॥

स्थाल्यां वैदूर्यमय्यां पचति च [1]तिलकणांश्चान्दनैरिन्धनौघैः[2]
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कतूलस्य[3] हेतोः।
कृत्वा[4] कर्पूरखण्डान् वृतिमिह कुरुते कोद्रवाणां समन्तात्,
प्राप्येमां कर्मभूमिं न[5] चरति मनुजो यस्तपो मन्दभाग्यः॥

[ अन्वयः ] यो मनुजः इमां कर्मभूमिं प्राप्य इह तपो न चरति (सः) मन्दभाग्यो वैदूर्यमय्यां स्थाल्यां चान्दनैरिन्धनोधैः तिलकणान् पचति, अर्कतूलस्य हेतोः सौवर्णैर्लाङ्गलाग्रैः वसुधां विलिखति, कर्पूरखण्डान्कृत्वा समन्तात् कोद्रवाणां वृतिं कुरुते।

[ विग्रहः ] वैदूर्यस्य मणिविशेषस्य विकारो वैदूर्यमयी। तस्याम्। तिलस्य कणास्तिलकणास्तान्। चन्दनस्येमे चान्दनाः, तैः। इन्धनानामोघाः, इन्धनौघाः, तैः। सुवर्णस्येमानी सौवर्णानि, तैः। लाङ्गुलस्याग्राणि लाङ्गूलाग्राणि, तैः, अर्कस्य तूलम्, अर्कतूलं, तस्य। कर्पूरस्य खण्डानि, तैः।

[ राजलक्ष्मीः ] यः–मन्दं भाग्यं यस्यासौ मन्दभाग्यः=मन्दप्रारब्धः। मनुजः=पुमान्। इमां=भूलोकलक्षणां। कर्मणो भूमिः कर्मभूमिः–तां–कर्मभूमिं = सत्कर्माचरणभुवम्। प्राप्य = लब्ध्वा। आसाद्याऽपि इह = कर्मभूमावस्यां। तपः=कृच्छ्रादिकर्म। न चरति=नाचरति। ( सः ) वैदूर्यमय्यां=वैदूर्यमणिमय्याम्। स्थाल्यां=पिठरे। चान्दनः=चन्दनसम्बन्धिभिः। चन्दनैरिति क्वचित् पाठः। इन्धनौघैः=काष्ठजातैः। तिलकणान्=तिललवान्। लशुनमिति पाठे महौषधमित्यर्थः। पचति = विक्लेदयति। अर्कतूलस्य=अर्काख्यपादपतूलस्य। हेतोः=कृते। तत्प्राप्त्यर्थम्। सौवर्णैः=कनकमयैः। सुवर्णनिर्मितैः। लाङ्गलाग्रैः=हलाग्रैः।

---

१ 'तिलखलम्' इति शोभनः पाठः। २ 'नाद्यैः'
३ 'मर्कमूलस्ये'ति पाठस्तु न शोभनः।
४ 'छित्वा कर्पूरखण्डान्' इति पाठा०। ५ 'न भजति च मनुजो' पा०।

वसुधां=रत्नधात्रीं। भुवम्। विलिखति=कर्षति। कृषति। कर्पूरखण्डान्=घनसारवृक्षस्य खण्डान्। कृत्वा=विधाय। तं निकृत्य। समन्तात्=सर्वतः। कोद्रवाणां=कोद्रवाणामन्नभेदानाम्। वृतिं=परिवृतिम्। रक्षाम्। कुरुते=विधत्ते। स्रग्धरा वृत्तम्।

[ भावार्थः ] यो वै पुमान् मनुष्यजन्म प्राप्याऽस्यां कर्मभूमौ शुभं कर्म नाचरति स वृथैव दुर्लभं मनुष्यजन्म यापयति।

[ कोशः] 'लवलेशकणाऽणवः' इत्यमरः। 'कोरदूषस्तु कोद्रवः' इत्यमरः 'मूढाल्पाऽपटुनिर्भाग्या मन्दाः' इत्यमरः।

[ भाषाटीका ] जो मनुष्य इस कर्मभूमि भारत में जन्म लेकर भी तप नहीं करता है और वृथा कार्यों में समय खोता है वह वैदूर्य मणि ( स्फटिक ) की बटलोही में चन्दन की लकड़ी से तिलों के कणों ( खली ) को मानों पकाता है, सोने के हल से आक की रूई के लिए भूमि को जोतता है, कपूर वृक्ष के टुकड़े २ करके उससे कोदों के खेत में वृति ( बाड़ ) करता है ॥१००॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवने[1] च सकला विद्याःकलाःशिक्षताम्[2]।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं,
नाऽभाव्यं भवतीह, कर्मवशतो भाव्यस्य नाशः कुतः १०१॥

[ अन्वयः ] ( लोकः ) अम्भसि मज्जतु, मेरुशिखरं यातु, आहवे शत्रून् जयतु, वाणिज्यं, कृषिसेवने च, सकला विद्याः, कलाः शिक्षतां परं प्रयत्नं कृत्वा खगवद्विपुलमाकाशं प्रयातु, ( तथापि ) इह अभाव्यं न भवति, कर्मवशतः भाव्यस्य ( च ) नाशः कुतः ?॥

[ राजलक्ष्मीः ] [ लोकः=जनः ]। अम्भसि=जले। मज्जतु=निमज्जतु। निपततु। मेरुशिखरं=सुमेरुशृङ्गम्। यातु=गच्छतु। तदारोहतु।

---

१ 'कृषिसेवनादि' पा०। २ 'शिक्षतु' पा०

आहवे=युद्धे शत्रून् = रिपून् । जयतु=विनाशयतु । विजयताम् । वाणिज्यं=वणिग्व्यवहारम् । शिक्षताम्=अभ्यस्यतु=करोतु । कृषिश्च सेवनं च कृषिसेवने=कृषिं, सेवाञ्च । [ करोतु ] सकलाः=सम्पूर्णाः । विद्याः= पुराणन्यायमीमांसादिकाश्चतुर्दशविद्याः । कलाः=चतुःषष्टिकलाश्च । शिक्षताम्=अभ्यस्यतु । परं = विशिष्टम् । उत्कृष्टतरम् । प्रयत्नं = यत्नं । कृत्वा = विधाय । खगवत् = पक्षिवत् । विपुलम् = विस्तृतम् । आकाशं = गगनम् । प्रयातु = गच्छतु । ( तथापि ) इह = जगति । अभाव्यं = यद्भावि तत् । न भवति = नैव कदाचिद्भवति । कर्मवशतः = प्रारब्धवशतः । भाव्यस्य च = भाविनश्च । नाशः = विनाशः । अभवनम् । कुतः = कस्मात् ? कथमपि नेत्यर्थः । शार्दूलविक्रीडितम् ।

[ भावार्थः ] जगति अभाव्यं न भवति, भावि च नापसारयितुं शक्यते ।

[ भाषाटीका ] चाहे जल में गोता लगावे, चाहे सुमेरु पर्वत पर जाए, युद्ध में शत्रुओं को जीते, वाणिज्य ( दुकान्दारी ) करे, खेती व नौकरी करे, सब विद्या पढ़े, सब कला कौशल सीखे, अत्यन्त प्रयत्न करके, अनन्त आकाश में पक्षी की तरह उड़ने लगे, परन्तु जो नहीं होने वाला है वह तो हो नहीं सकता, और जो दैववश होने को है उसे किसी तरह से भी हटाया नहीं जा सकता । अर्थात् लाख प्रयत्न करने पर भी अभावी होता नहीं, भावी टलता नहीं ॥ १०१ ॥

भीमं वनं भवति तस्य [1]पुरं प्रधानं,
सर्वो जनः सुजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा,
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०२ ॥

[ अन्वयः ] यस्य नरस्य विपुलं पूर्वसुकृतमस्ति तस्य भीमं वनं प्रधानं पुरं भवति, तस्य सर्वो जनः सुजनतामुपयाति, कृत्स्ना भूः च सन्निधिरत्नपूर्णा भवति ।

१ 'परं' ।

[ राजलक्ष्मीः ] यस्य-नरस्य = पुरुषस्य । विपुलं=विशालम् । अतिमहत् । पूर्वसुकृतं=पूर्वपुण्यम् । अस्ति=वर्तते । तस्य पुंसः । भीमं=भयङ्करम् । वनं=काननम् । प्रधानं=जनरत्नराशिपरिपूर्णं । पुरं=नगरम् । तद्वत् । भवति=जायते । तस्य=सुकृतिनः पुंसः । सर्वो जनः=सकलोऽपि लोकः । सुजनतां=सौजन्यम् । उपयाति=गच्छति । आलम्बते । कृत्स्नाऽसकलाऽपि । भूश्च=पृथिवी च । सन्निधिभिश्च रत्नैश्च पूर्णा सन्निधिरत्नपूर्णा=महानिधिरत्नादिपूर्णा । भवति=जायते । वसन्ततिलका वृत्तम् ।

[ भावार्थः ] पूर्वपुण्यशालिनः सर्वं जगदेव धनरत्नपूर्णं भवति ।

[ कोशः ] 'दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' इत्यमरः ।

[ भाषाटीका ] जिस पुरुष का पूर्वजन्मोपार्जित महान् पुण्य है उसके लिए घोर भयानक बन भी उत्तम नगर की तरह सुखप्रद हो जाता है। सभी लोग उसके लिए सज्जन हो जाते हैं। सम्पूर्ण पृथ्वी भी धन धान्य व खजानों से भरी पूरी हो जाती है ॥ १०२ ॥

**को लाभो-गुणिसङ्गमः, किमसुखं-प्राज्ञेतरैः सङ्गतिः,**
**का हानिः-समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।**
**कः शूरो-विजितेन्द्रियः, प्रियतमा काऽनुव्रता, किं धनं**
**विद्या, किं सुखमप्रवासगमनं, राज्यं किमाज्ञाफलम् ॥ १०३ ॥**

[ अन्वयः ] लाभः कः ?, गुणिसङ्गमः । असुखं किम् ?, प्राज्ञेतरैः सङ्गतिः । हानिः का ?, समयच्युतिः । निपुणता का ?, धर्मतत्त्वे रतिः । शूरः कः ?, विजितेन्द्रियः । प्रियतमा का ?, अनुव्रता । धनं किम् ?, अप्रवासगमनम् । राज्यं किम् ?, आज्ञाफलम् ।

[ विग्रहः ] गुणिनां सङ्गमः गुणिसङ्गमः । न सुखम् असुखम्, समयस्य च्युतिः समयच्युतिः । धर्मस्य तत्त्वं धर्मतत्त्वम्, तस्मिन् । विजितानि इन्द्रियाणि येनासौ विजितेन्द्रियः । प्रवासे गमनं प्रवासगमनं, नप्रवासगमनम् अप्रवासगमनम् । आज्ञैव फलं यस्य तत् आज्ञाफलम् ।

[राजलक्ष्मीः] पृच्छति-क इति । लाभः=अभिमतसिद्धिः । का=का किल भवति ? । उत्तरयति- गुणीति । एवमग्रेऽपि । गुणिसङ्गमः=गुणिजनसङ्गः । असुखं किं=दुःखं किम् ? । प्राज्ञेतरैः ॥ मूर्खैः । सङ्गतिः=सङ्गमः । हानिः का=ज्यानिः का ? । समयच्युतिः=वृथाकालक्षेपः । निपुणता का=कुशलता का ? । किं पाण्डित्यम् । धर्मतत्त्वे=धर्मरहस्ये । ज्ञानभक्त्यादौ । रतिः=अनुरागः । शूरः कः=वीरः कः ? । विजितेन्द्रियः-इन्द्रियविजयी निगृहीतेन्द्रियग्रामः । प्रियतमा=प्रेष्ठा । प्रेयसी । का=का खलु भवति ? । अनुव्रता=आज्ञाकारिणी । प्रियंवदा । धनं किं=द्रविणं किम् ? । विद्या=चतुर्दश विद्याः । शास्त्रादिजंज्ञानम् । सुखंकिम्=शर्म किम् । अप्रवासगमनं=परदेशगमनाऽभावः । स्वगृहेनिवासः । राज्यं किम् ? =राज्यसुखं किम् । आज्ञाफलं=शासनसाफल्यम् । शार्दूविक्रीडितं वृत्तम् ।

[भाषाटीका] संसार में लाभ क्या है ?, गुणियों का सङ्ग । दुःख क्या है ?, मूर्खों का सङ्ग । हानि क्या है ?, समय का व्यर्थ खोना । चतुराई क्या है ?, धर्म के तत्व (भगवद्भजन) में मन लगाना । शूरवीरता क्या है ?, इन्द्रियों का विजय । प्रियतमा कौन होती है ?, जो पति की आज्ञा का पालन करती है । सच्चा धन क्या है ?, विद्या । सुख क्या है ?, परदेश न जाना । राज्य का सुख क्या है ?, आज्ञा का ठीक २ पालन होना ॥ १०३ ॥

**मालतीकुसुमस्येव द्वयी वृत्तिर्मनस्विनः ।**
**मूर्ध्नि वा सर्वलोकस्य, शीर्यते वन एव वा ॥ १०४ ॥**

[अन्वयः] इह मालती कुसुमस्येव मनस्विनः द्वयी वृत्तिः । सर्वलोकस्य मूर्ध्नि वा [वर्त्तते] वन एव वा शीर्यते ।

[विग्रहः] मालत्याः कुसुमं मालतीकुसुमम् । तस्य । सर्वो लोकः सर्वलोकः, तस्य—सर्वलोकस्य ।

१ 'द्वे गती हि' । २ 'मूर्ध्नि सर्वस्य लोकस्य' ।

[राजलक्ष्मीः] मालती कुसुमस्येव=जातिपुष्पस्येव । मनस्विनः= उन्नतचित्तस्य । महतः । द्वयी वृत्तिः=द्विविधैव दशा भवति । सर्व-लोकस्य = सकललोकस्य । मूर्ध्नि वा = शिरसि वा । 'वर्त्तते' इति शेषः । वन एव वा = कानन एव वा । शीर्यते = विशीर्णो भवति ।

[कोशः] 'सुमना मालती जातिः' इत्यमरः ।

[भाषाटीका] मालती के फूलों की तरह मनस्वी (ऊंचे विचार वाले) लोगों की दो ही गति हैं। या तो वे सब के शिर पर ( ऊचे आसन पर ) रहते हैं । या फिर बन (एकान्त) में पड़े २ सूख जाते (कालयापन करते) हैं ॥ १०४ ॥

**अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ।**
**पर परिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ १०५ ॥**

[अन्वयः] अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः परपरिवाद-निवृत्तैः [सज्जनैः] वसुधा क्वचित्क्वचित् मण्डिता ।

[विग्रहः] अप्रियवचनैः दरिद्राः—अप्रियवचनदरिद्राः, तैः । प्रियाणि वच-नानि प्रियवचनानि, प्रियवचनैः आढ्याः प्रियवचनाढ्याः, तैः । स्वेषांदाराः स्वदाराः, तेभ्यः, तेषु वा परितुष्टाः, तैः । परेषां परिवादाः परपरिवादाः, पर-परिवादेभ्यो निवृत्ताः-परपरिवादनिवृत्ताः, तैः ।

[राजलक्ष्मीः] अप्रियवचनदरिद्रैः = कटुवाक्य दरिद्रैः । कटुभाषण शून्यैः । प्रियवचनाढ्यैः = सूनृतवचनधनाढ्यैः । प्रियवचनधनिभिः । मधुरभाषिभिः । स्वदारपरितुष्टैः = स्वपत्नीसन्तुष्टैः । परदारविमुखैः। परपरिवादनिवृत्तैः = परनिन्दापराङ्मुखैः । [सज्जनैः = सत्पुरुषैः] । वसुधा = पृथ्वी । क्वचित्क्वचित् = क्वचिदेव । यत्र कुत्रचिदेव । मण्डिता अलङ्कृता । अस्तीति शेषः । सन्तो न सर्वत्र सन्ति । आर्या जातिः ।

[कोशः] 'इभ्य आढ्यो धनी स्वामी' इत्यमरः ।

[ भाषाटीका ] जो अप्रिय बचनों के लिए दरिद्र हैं, प्रियवचनों के धनी हैं, अपनी स्त्री से ही सन्तुष्ट हैं, दूसरे की निन्दा से दूर रहते हैं—ऐसे महापुरुषों से यह पृथ्वी कहीं २ अलंकृत है। अर्थात् ऐसे महात्मा सज्जन बहुत कम होते हैं ॥ १०५ ॥

कदर्थितस्यापि हि धैर्यवृत्ते-
न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्ने-
र्नाऽधः शिखा याति कदाचिदेव ॥ १०६ ॥

[ अन्वयः ] कदर्थितस्यापि हि धैर्यवृत्तेः धैर्यगुणः प्रमार्ष्टुं न शक्यते। अधोमुखस्यापि कृतस्य वह्नेः शिखा कदाचिदपि अधः न याति।

[ विग्रहः ] धैर्येण धैर्यान्विता वा वृत्तिर्यस्यासौ धैर्यवृत्तिः, तस्य धैर्यवृत्तेः। धैर्यमेव गुणः—धैर्यगुणः। अधो मुखं यस्यासौ अधोमुखः। तस्य।

[ राजलक्ष्मीः ] कदर्थितस्यापि हि=क्लेशितस्यापि हि। पीडितस्यापि हि। धैर्यवृत्तेः=धीरस्य। मनस्विनः पुंसः। धैर्यगुणः = धीरत्वाख्यो गुणः। धैर्यम्। प्रमार्ष्टुं=विनाशयितुम्। दूरीकर्त्तुम्। न शक्यते= कथमपि न शक्यते। तथाहि—अधोमुखस्यापि = अधोवदनस्यापि। कृतस्य = अधःकृतस्यापि च। वह्नेः = अग्नेः। शिखा=ज्वाला। कदाचिदपि = कर्हिचिदपि। अधो न याति = नीचैर्न गच्छति। उपर्येव गच्छति। उपजातिर्वृत्तम्।

[ कोशः ] 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' इत्यमरः।

[ भाषाटीका ] नाना प्रकार से कष्ट दिये जाने पर भी धीर व्यक्ति का धैर्य नहीं छुड़ाया जा सकता है। देखो—अग्नि को नीचे की ओर मुख करके रखने पर भी उसकी लपट ऊपर की ओर ही जाती है। ( अर्थात् विपत्ति में भी धीर लोग धैर्य नहीं छोड़ते है ) ॥ १०६ ॥

कान्ताकटाक्षविशिखा न लुनन्ति[1] यस्य
चित्तं, न निर्दहति कोपकृशानुतापः।
कर्षन्ति[2] भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ १०७ ॥

[ अन्वयः ] कान्ताकटाक्षविशिखाः यस्य चित्तं न लुनन्ति, कोपकृशानुतापः यस्य चित्तं न निर्दहति, भूरिविषयाश्च लोभपाशैः न कर्षयन्ति। स धीरः इदं कृत्स्नं लोकत्रयं जयति।

[ विग्रहः ] कान्तायाः—कटाक्षः—कान्ताकटाक्षाः, ते एव विशिखाः—कान्ताकटाक्षविशिखाः। कोप एव कृशानुः, कोपकृशानुः। तस्य तापः कोपकृशानुतापः। लोभ एव पाशाः—लोभपाशाः, तैः—लोभपाशैः। लोकानां त्रयं-लोकत्रयं,तत्।

[ राजलक्ष्मीः ] कान्ताकटाक्षविशिखाः=कामिनीकटाक्षबाणाः। यस्य=पुंसः। चित्तं=मनः। न लुनन्ति=न छिन्दन्ति। कोपकृशानुतापः= क्रोधवैश्वानरसन्तापः। कोपाग्निसन्तापश्च। यस्य चित्तं न=नैव। निर्दहति=न सन्तापयति। भूरिविषयाश्च=नानाविधा विषयाश्च। लोभपाशैः=लोभाख्यपाशकैः। लोभबन्धनैः। न कर्षन्ति=नाकर्षन्ति। 'तर्षन्ति' इति पाठे—तृष्णां नोत्पादयन्तीत्यर्थः। स धीरः=स हि धैर्यशाली पुमान्। इदं कृत्स्नं=सकलं। लोकत्रयं=त्रैलोक्यम्। जयति= विजयते। वसन्ततिलका वृत्तम्।

[ कोशः ] 'प्रमदा मानिनी कान्ता ललना च नितम्बिनी' इत्यमरः। 'कृशानुः पावकोऽनलः, इत्यमरः।

[ भाषाटीका ] जिस मनुष्य के चित्त को कामिनी के कटाक्षरूपी बाण छेद न सकें, जिसके मन को क्रोध रूपी अग्नि सन्तप्त न कर सके, जिसके मन को

१ 'दहन्ति'। २ 'तर्षन्ति'।

नाना प्रकारके विषय रूपी लोभपाशों से खींच न सकें, वह धीर पुरुष सारे त्रैलोक्य ( एशिया यूरोप अमेरिका ) को जीत सकता है ॥ १०७॥

एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ।
क्रियते भास्करेणेव [1]स्फारस्फुरिततेजसा ॥ १०८ ॥

( अन्वयः ) स्फारस्फुरिततेजसा भास्करेणेव एकेनापि हि शूरेण महीतलं पादाक्रान्तं क्रियते ।

( विग्रहः ) पादेन आक्रान्तं, पादैर्वा आक्रान्तं–पादाक्रान्तम् । मह्यास्तलं महीतलम् । स्फारं च तत् स्फुरितं च तेजो यस्यासौ स्फारस्फुरिततेजाः, तस्य स्फारस्फुरिततेजसः ।

( राजलक्ष्मीः ) स्फारस्फुरिततेजसा=विपुलप्रदीप्ततेजसा । दीप्यमानेन भास्करेणेव=सूर्येणेव । एकेनापि=एकाकिनाऽपि । शूरेण हि=वीरेण हि । महीतलं=भूतलं । पादाक्रान्तं=चरणाक्रान्तं । सूर्यपक्षे=किरणाक्रान्तम् । क्रियते=विधीयते ।

( कोशः ) 'पादा रश्म्यङ्घ्रितुर्यांऽशाः' इत्यमरः ।

[ भाषाटीका ] जैसे सूर्य नारायण अपने तेजस्वी पादों ( किरणों ) से जगत् को आक्रान्त करते हैं वैसे ही शूरवीर मनुष्य भी इस सम्पूर्ण जगत् को पादाक्रान्त करता है ॥ १०८ ॥

वह्निस्तस्य जलायते, जलनिधिः कुल्यायते तत्क्षणा-
न्मेरुः स्वल्पशिलायते, मृगपतिः सद्यः कुरङ्गायते ।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति १०९

( अन्वयः ) यस्याङ्गे अखिललोकवल्लभतमं शीलं समुन्मीलति तस्य वह्निः जलायते, जलनिधिः कुल्यायते, मेरुः तत्क्षणात् स्वल्पशिलायते, मृगपतिः सद्यः कुरङ्गायते, व्यालो माल्यगुणायते, विषरसः पीयूषवर्षायते ।

१ 'परिस्फुरित' ।

( विग्रहः ) जलमिवाचरति जलायते। कुल्येवाचरति कुल्यायते। स्वल्पा शिला स्वल्पशिला, सा इवाचरति स्वल्पशिलायते। कुरङ्ग इवाचरति कुरङ्गायते। अतिशयेन वल्लभं—वल्लभतमम्। अखिलानां लोकानां वल्लभतमम् अखिललोकवल्लभतम्।

[ राजलक्ष्मीः ] यस्य=पुंसः। अङ्गे=वपुषि। अखिललोकवल्लभतमं=सकलजनप्रियतमम्। हृद्यम्। शीलं=सद्वृत्तम्। समुन्मीलति=समुज्जृम्भते। तिष्ठति। तस्य=पुंसः। वह्निः=अग्निः। जलायते=जलमिव शैत्यं वहति। जलनिधिः=समुद्रः। कुल्यायते=स्वल्पकृतिमसरिदिव सुतरो भवति। मेरुः=सुमेरुः। तत्क्षणात्=सद्य एव। स्वल्पशिलायते= क्षुद्रपाषाणखण्डवल्लाघवं व्रजति। मृगपतिः=सिंहोऽपि। सद्यः=झटिति। कुरङ्गायते=मृगवत्सौम्यभावं धत्ते। व्यालः=सर्पः माल्यगुणायते=माला सूत्रवन्निस्तेजस्त्वं धत्ते। विषरसः=गरलमपि। पीयूषस्य वर्षं, पीयूषवर्षं, तद्वदाचरति–पीयूषवर्षायते=अमृतवृष्टिवदानन्दप्रदं भवति। शार्दूलविक्रीडितं वृत्तम्।

( भावार्थः ) शीलवतः सर्वं जगदनुकूलं भवति।

( कोशः ) 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः। 'मृगे कुरङ्गवातायुहरिणाऽजिनयोनयः' इत्यमरः। 'पीयूषममृतं सुधा' इत्यमरः। 'व्यालो दुष्टगजे सर्पे' इत्यमरः। 'वृष्टिवर्षम्' इत्यमरः।

( भाषाटीका ) सुन्दर शीलस्वभाववाले मनुष्य के लिए–अग्नि जल की तरह ठण्डी हो जाती है, समुद्र छोटी सी नहर की तरह हो जाता है, सुमेरुपर्वत भी छोटी सी सिला ( पत्थर ) को तरह हो जाता है, सिंह भी-मृग की तरह शान्त हो जाता है, भयङ्कर सर्प भी माला के सूत की तरह निश्चेष्ट हो जाता है, विष ( जहर ) भी अमृत हो जाता है ॥ १०९ ॥

लज्जागुणौघजननीं जननीमिव स्वा-
मत्यन्तशुद्धहृदयामनुवर्तमानाम् ।
तेजस्विनः सुखमसूनपि सन्त्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ११० ॥

[ अन्वयः ] सत्यव्रतव्यसनिनः तेजस्विनः असूनपि सुखं सन्त्यजन्ति (किन्तु) लज्जागुणौघजननीम् अत्यन्तशुद्धहृदयामनुवर्तमानां स्वां जननीमिव प्रतिज्ञां पुनर्न ( सन्त्यजन्ति ) ।

[ विग्रहः ] लज्जा च गुणाश्च—लज्जागुणाः, तेषामोघः लज्जागुणौघः । यद्वा लज्जाप्रधाना गुणाः—लज्जागुणास्तेषामोघ इति । लज्जैव गुणौघ इति वा । तस्य जननी लज्जागुणौघजननी, ताम् । अन्यन्तं शुद्धं हृदयं यस्याः ( यया या ) सा अत्यन्तशुद्धहृदया, ताम् । प्रशस्तं तेजोऽस्त्येषां ते तेजस्विनः । सत्यमेव व्रतं सत्यव्रतं, तदेव व्यसनं, तदस्त्येषां ते सत्यव्रतव्यसनिनः ।

( राजलक्ष्मीः ) सत्यव्रतव्यसनिनः=सत्यभाषणनियमाऽऽसक्ताः । तेजस्विनः=प्रतापिनः । असूनपि=सर्वतः प्रियान् प्राणानपि । सुखं–सुखं यथा स्यात्तथा । सन्त्यजन्ति=परित्यजन्ति । ( किन्तु ) लज्जागुणौघ-जननीं=लज्जादिगुणसमूहजननीम् । अत्यन्तशुद्धहृदयाम् = नितरां शुद्ध-मानसाम् । प्रतिज्ञापक्षे शुद्धं मनो यया भवति ताम् । अनुवर्त्तमानाम्= अनुकूलाम् । प्रतिज्ञापक्षे–प्रवर्त्तमानाम् । स्वां = स्वकीयाम् । जननी-मिव=मातरमिव । प्रतिज्ञां=संविदम् । पुनः=किन्तु । न=नैव सन्त्य-जन्ति । वसन्ततिलका वृत्तम् ।

[ भावार्थः ] सद्भिः प्राणैः कण्ठगतैरपि प्रतिज्ञा न त्याज्या ।

[ कोशः ] 'संविदागूः प्रतिज्ञानम्' इत्यमरः । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' इत्यमरः ।

[ भाषाटीका ] तेजस्वी लोग अपने प्राणों को सुख से ( अनायास ही ) छोड़ सकते हैं, पर लज्जा विनय दया आदि गुणों को देनेवाली, शुद्धहृदय ( प्रतिज्ञापक्ष में—हृदय को शुद्ध करने वाली या शुद्ध हृदय से की गई ), अनुवर्त्तमान ( मातृ पक्ष में—अनुकूल चलने वाली, अर्थात् हित करनेवाली, प्रतिज्ञापक्ष में—अभी तक पूर्ण न हुई हो ऐसी ) प्रतिज्ञा को नहीं छोड़ सकते हैं। क्योंकि प्रतिज्ञा पालन करने से सभी अभीष्ट सिद्ध होते हैं ॥ ११० ॥

इति मरुमण्डलमार्त्तण्ड-पण्डितराज-'तर्करत्न' श्रीस्नेहिरामशास्त्रिणां पौत्रेण, न्यायाचार्य—श्रीशिवनारायणशास्त्रिणां पुत्रेण, सतीसार्वभौम—राजलक्ष्मीगर्भसम्भवेन श्रीगुरुप्रसाद-शास्त्रिणा विरचिता नीतिशतकटीका ॥

॥ हरिः ॐ तत्सत् ॥

# अथ नीतिशतकपरिशिष्टम्

नीतिशतकलिखितप्राचीनपुस्तकेषु, क्वचिन्मुद्रितेषु च दृश्यमानानि पद्यानि यथा—

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश्चाऽन्ये जीर्णमङ्गे सुभाषितम् ॥ १ ॥

बोद्धारः=प्रतिपत्तारः । मत्सरोऽन्यशुभद्वेषः, तेनग्रस्ताः=समाक्रान्ताः । विद्वांसो हि मत्सरप्रभावान्न गुणग्राहिणः, किन्तु छिद्रान्वेषिण एवेति भावः । प्रभवः = अधिकारशालिनो भूपा इति यावत् । स्मयेन=गर्वेण । दूषिताः=दोषाविलाः । अभिमानिनस्ते सुभाषितं नाकलयन्तीत्यर्थः । अन्ये = पूर्वोक्तेभ्य इतरे । अज्ञानेन = मौर्ख्येण, उपाहृताः = विनष्टाः । न ते तस्याधिकारिणः । एतैः पूर्वोक्तहेतुभिः सुभाषितं=मनोहारि वचनम्, अङ्गेऽन्तरङ्गे एव जीर्णं = नष्टम् । न तु लोकश्रवणालङ्करणीभूतमिति भावः ॥ १ ॥

परार्थसङ्घटनकारकाणामेव जन्मसाफल्यं नान्येषामित्याह—

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं,
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
सञ्जातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ २ ॥

जात इति । एकः=केवलः स कूर्म एव जातः । जन्म लब्धवानित्यर्थः । कुतः ? । येन कूर्मेण पृथुर्महान्यो भुवनभरः=चतुर्दशविष्टपभारस्तस्मै । तदुद्वहनार्थमिति भावः । पृष्ठं = कूर्परतलम् । अर्पितं=दत्तम् । किञ्चयत्र=यस्मिन् ध्रुवे । तेजस्विचक्रं=नक्षत्रमण्डलं, नियमितं=नियुक्तं सत् भ्रमति=पर्यावर्त्तते । तस्य= ध्रुवस्य, जन्म श्लाघ्यं = प्रशस्तम् । अन्ये तु—परहितकरणे=परार्थाचरणे व्यर्थो निष्फलः पक्षः सञ्जातो येषां ते सञ्जातव्यर्थपक्षाः । उपरिष्टान्न=ध्रुववदुपरिभागे वर्तमाना न भवन्ति । अधश्च न—कूर्मवदधस्ताद्वर्तमानाश्च न भवन्ति । किन्तु— उदुम्बरो जन्तुफलाख्यवृक्षविशेषस्तस्य फलमुदुम्बरम् । ब्रह्माण्डमुदुम्बरं तस्यान्त-

राले ये मशकास्तैस्तुल्यं तद्वत् जाता उत्पन्नाश्च ते नष्टाश्च । भवन्तीति शेषः । तैः किमपि न कृतमिति भावः ॥ २ ॥

मरणमेव वरं न तु शीलनाश इत्याह—

वरं शृङ्गोत्सङ्गाद्गुरुशिखरिणः क्वापि विषमे
पतित्वाऽयं कायः कठिनदृषदन्ते विगलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ३ ॥

वरमिति । अयं कायः = शरीरं, गुरुशिखरिणः=समुन्नतपर्वतस्य, शृङ्गोत्सङ्गात्=शिखरप्रान्तात्, क्वापि=कस्मिंश्चिदपि, विषमे=विकटे, कठिनदृषदन्ते=कठोरशिलान्ते, पतित्वा विगलितश्चूर्णितश्चेत्, वरं—युक्तं । तथा हस्तः—तीक्ष्णदशने=शितदंष्ट्रे, फणिपतिमुखे—सर्पवदने न्यस्तश्चेत्, वरं=युक्तमेव । वह्नौ पातोऽग्निप्रवेशोऽपि वरं युक्तम् । किन्तु तदपि = तथापि, शीलविलयः=शीलत्यागः, कृतश्चेन्न वरं=न युक्तम् । शीलत्यागः सर्वथा न कार्य इति भावः ॥ ३ ॥

यथा कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ ४ ॥

यथेति । आर्यो=दैवायतिकः, साधुः । पतन्नपि नीचैर्भवन्नपि, कन्दुकपातेन-तादृशदृष्टान्तेन यथोत्पतति=ऊर्ध्वं प्राप्नोति, तथा तद्वदेव अनार्य्यो=नीचः । पतति यथा मृत्पिण्डपतनं । भवतीति शेषः । मृत्पिण्ड इव तत्रैव विशीर्णो भवति ॥ ४ ॥

अयममृतनिधानं नायकोऽप्योषधीनां
शतभिषगनुयातः शम्भुमूर्ध्नोऽवतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ? ॥ ५ ॥

अयमिति । अयं प्रत्यक्षगोचरश्चन्द्रोऽमृतनिधानं—सुधाकरोऽपि, ओषधीनां नायको नेताऽपि, शतभिषजा नक्षत्रेणानुयातोऽनुसृतोपि, पक्षे शतवैद्यानुयातोऽपि च तथैव शम्भोः शङ्करस्य मूर्ध्नोऽवतंसः—मस्तकालङ्करणमपि । पूर्वोक्तमेतादृशमपि

शशाङ्कं राजयक्ष्मा-क्षयरोगो, न विरहयति—न त्यजति। ततश्च हतविधिर्नष्टभाग्यन्तस्य परिपाकोऽनुशासनं केन वा पुरुषेण लङ्घनीयः?। न केनापीति भावः॥५॥

प्रियसख! विपद्दण्डाघातप्रपातपरम्परा-
[1]परिचयबले चिन्ताचक्रे निधाय विधिः खलः।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्-
भ्रमयति मनो नो जानीमः किमत्र विधास्यति? ॥६॥

प्रियेति। हे प्रियसखे=हे प्रियमित्र, खलः=शठो विधिः, प्रगल्भः प्रौढश्चासौ कुम्भकारस्तद्वन्मनो चित्तं मृदमिव—मृत्तिकामिव बलात्पिण्डीकृत्य विपदो ये दण्डाघातास्तेषां प्रपातपरम्परा वारंवारमावृत्तिस्तस्याः परिचयः—सन्निवेशः स एव बलं दार्ढ्यं यस्य तस्मिन् चिन्ताचक्रे—चिन्तारूपे चक्रेनिधाय भ्रमयति। तत्र च किं विधास्यति=किं करिष्यतीति नो जानीमः? ॥ ६ ॥

विरम विरमायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे।
अयि जड विधे! कल्पापायेऽप्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः॥ ७ ॥

विरमेति। अयीति सम्बोधनम्। जडविधे=मूर्खतैव! दुरध्यवसायतः=निन्द्यव्यापारतो य आयासः परिश्रमस्तस्माद्विरम विरम=विरतो भव। स चायमेव यद्विपदि=कष्टावस्थायां महतां श्रेष्ठानां धैर्यध्वंसं धैर्यनाशमीक्षितुं द्रष्टुमीहसेऽभिलषसि!। दृष्टान्तेनाह—कल्पापायें—युगान्तेऽपि। कठिनसमय इत्यर्थः। अपेता नष्टा निजक्रमाः स्वमर्यादा येषां ते तथोक्ताः क्षुद्रा नीचा एते कुलशिखरिणः=कुलाचलाः, जलराशयः समुद्रा वा न खलु। धीरस्य तत्रापि धैर्यध्वंसो नेत्यायासमात्र एव तव स्यादिति भावः॥ ७ ॥

दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनमेन्मनागपि महान्नेवाश्रयः कारणम्।

---

१ 'चले' पा०।

सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ ८ ॥

दैवेनेति। प्रभुणा=शक्तिशालिना दैवेन=विधिना, जगति=संसारे यस्य नरस्य यद्वस्तु प्रमाणीकृतं नियमितम्, तद्वस्तु तस्योपनमेत्—प्राप्नुयात्। महानाश्रयो मनागपि नैवेषदपि (न) कारणं-हेतुः। तथाहि सर्वाशापरिपूरके-सकलमनोरथपूरणसमर्थे, जलधरे=मेघे, प्रत्यहं वर्षत्यपि-चातकमुखे सूक्ष्मास्तत्रापि द्वित्रा एव तत्सङ्ख्याका एव पयोबिन्दवो=जलकणाः पतन्ति। अतो दैवस्यैव प्राबल्यमिति भावः ॥ ८ ॥

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयत चिरमनुस्यूते शुभे कर्मणि।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥ ९ ॥

शुभ्रमिति। चिरं बहुकालतोऽनुस्यूतेऽनुवर्तमाने शुभे पुण्यावहे कर्मणि सति, शुभ्रं सद्म=सुन्दरं वेश्म, सविभ्रमाः=सविलासाः, युवतयस्तरुण्यः, श्वेतं च तदातपत्रं छत्रं तेन उज्ज्वला अवदाता लक्ष्मीः=राज्यश्रीरित्येतत् सर्वमनुभूयते। विछिन्ने सतितु। शुभे कर्मणीति सम्बद्धयते। नितरामत्यन्तमनङ्गकलहो=रतियुद्धं, तदेव-क्रीडा केलिस्तत्र त्रुटन् तन्तुर्यस्य तादृशं मुक्ताजालमिव। झटिति=द्राक्-भ्रश्यत् विच्छिद्यमानं सत्। पूर्वोक्तं-सकलम्। दिशः प्रयाति। इति दृश्यतां=विलोक्यताम्। पूर्वकृतसुकृतानामेव सर्वं सुलभं न त्वन्येषामिति भावः ॥ ९ ॥

इति नीतिशतके परिशिष्टखण्डम्।



श्रीगणेशाय नमः ।

# अथ नीतिशतकस्य सरला प्राचीनटीका



दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकसाराय नमः शान्ताय तेजसे ॥ १ ॥
विघ्नेशं विघ्नहर्तारं गणराजं नमाम्यहम् ।
शारदां वरदां नौमि जाड्यापनुत्तये तथा ॥ १ ॥
श्रीगोपालं नमस्कृत्य नत्वा गुरुपरंपराम् ।
भर्तृहरिकृतो ग्रन्थस्तस्य व्याख्यां करोम्यहम् ॥ २ ॥

दिगिति । दशदिशासु तथा भूतभविष्यद्वर्तमानत्रिकालेषु च अनवच्छिन्नः = अपरिमेयः, अत एव अनन्तः=अन्तो यस्य नास्ति । चिन्मात्रमेव ज्ञानं मूर्तिः स्वरूपं यस्य—तथाभूताय । स्वानुभूतिः=स्वस्यानुभवः स एव सारांशो यस्य एतादृशं शान्तं यत्तेजः ब्रह्मरूपं तस्मै नमः । ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टाचारोऽस्ति । अतो ग्रन्थकर्त्रा मङ्गलं नमस्कारात्मकं कृतम् । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते एवं नीतिर्वर्तते । तर्हि केन कारणेन ग्रन्थः कृतस्तत्कारणं येन वैराग्योत्पत्तिस्तल्लिखति ॥ १ ॥

यां चिन्तयामि सततं मयि सा विरक्ता,
साप्यन्यमिच्छति जनं, स जनोऽन्यसक्तः ॥

अस्मत्कृते च परितुष्यति काचिदन्या,
धिक्तां च तं च मदनं च इमां च मां च ॥ २ ॥

यामिति। धिग्योगे द्वितीया भवति अतो द्वितीया विभक्तिरुक्ता। राज्ञा विक्रमार्केण स्वलब्ध फलं कस्मैचिद्ब्राह्मणाय दत्तम्। तस्य फलस्य महिमा तु येन भक्षितं स अमरो भवति, मरणं नास्तीति। तत्फलं ब्राह्मणेन मनसि विचार्य बहूनां पालको राजा भर्तृहरिस्तस्मै दत्तम्। तेन भर्तृहरिणा स्वपत्नी–प्रियतमा, तस्यै दत्तम्। तयापि तस्याः कश्चन जारस्तस्मै प्रदत्तम्। जारेणाऽपि स्वप्रिया काचित्पुंश्चली तस्यै प्रदत्तम्। तत्फलमेकस्मिन्दिनेपुंश्चलीसमीपे राज्ञा दृष्टम्। तदा तेन पश्चात्तापः कृतः। तावत्पूर्वापरं ज्ञात्वा पश्चाद्वैराग्येण निन्दति। अहं यां स्त्रियं चिन्तयामि प्राणादधिकान्। सापि विरक्ता। सा स्त्री अन्यजारं प्रियमिच्छति। सोऽपि अन्यां पुंश्चलीं प्रियत्वेनेच्छति। एवं मदर्थेऽपि काचन स्त्री मया सह सङ्गो भवतुइति मनसि संतुष्टिमानयति। एवं न कश्चित्कस्यचित्प्रियः। अतो निन्दति। सा पुंश्चली तां धिक्। इयं मदीया स्त्री इमां च धिक्। अहमप्येतादृशो मूर्खः मां च धिक्। इदं सर्वं मदनकृतं जातमतो मदनं च धिक्॥ २ ॥

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ॥ ३ ॥

एवं ज्ञाते स्वस्मिन्मूर्खत्वं ज्ञातमतो मूर्खलक्षणानि वदति–अज्ञ इति। यः केवलं न जानाति स अज्ञः मूर्खः। स तु शिष्टेन युक्ताऽयुक्तमुक्तं तच्छृणोति तथैव करोति अतः सुखेन आराधयितुं वशीकर्तुं शक्यः। यस्तु विशेषज्ञः कदाचित्प्रमादादयुक्ते कर्मणि प्रवृत्तः सन् अपरेण निवारितश्चेत् शृणोति। स च अत्यन्तं वशीकर्तुं शक्यः। अधुना अनयोर्विलक्षणः–अज्ञो न भवति, पूर्णज्ञाताऽपि न भवति, शास्त्रे प्रवेशो नास्ति, बहुश्रुततया स्वस्मिन्पण्डितमन्यतया परस्य वचनं

न शृणोति। किंचित् ज्ञानलवेन दुर्विदग्धो=गर्विष्ठस्तं वशीकर्तुं ब्रह्माऽपि न शक्तः। इतरेषां का वार्ता ॥ ३ ॥

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरा-
त्समुद्रमपि सन्तरेत्प्रचलदूर्मिमालाकुलम्।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ४ ॥

प्रसह्येति। अधुना मूर्खः असन्मतिनिविष्टचित्तस्तस्य चित्तमाराधितुं न शक्यम्। आराधनाऽभावं दृष्टान्तेन वदति। मकरो नाम झषविशेषस्तस्य वक्त्रे यो दंष्ट्राङ्कुरस्तस्मिन्मणिः, स मणिः प्रसह्य बलात्कारेण निष्कासितुं शक्यो भवेत्। मकरवक्त्रे मणेरभाव एव, सोपि कालेन कदाचित् भविष्यति। तथा प्रचलन्तीनामूर्मीणां लहरीणां माला समुदायास्तैराकुलं समुद्रमपि बाहुभ्यां सन्तरेत्। तथा कोपितभुजङ्गं शिरसि पुष्पवद्धारेयत्। एते अघटिता दृष्टान्ताः कालेन भविष्यन्ति, परन्तु प्रतिनिविष्टः आविष्टचित्तः सन् यत्किञ्चिन्मनसि धृतं न त्यजति, कस्यापि वचनं न शृणोति, तस्य मूर्खस्य चित्तमाराधितुं न शक्यं। ज्ञातापि आविष्टचित्तः सन् यत्किञ्चित्करोति स्वहितं न जानाति सोपि मूर्खाऽन्तःपातिरेव। यथा रावणदुर्योधनादयः ॥ ४ ॥

लभेत सिकतासु तैलमपि यत्नतः पीडय-
न्पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः।
कदाचिदपि पर्यटञ्छशविषाणमासादये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥

लभेदिति। सिकतासु बालुकासु तैलं यत्नतः प्रयासेन पीडयन् सन् कदाचि-

ल्लभेत । तथाच तृषार्तः सन् मृगतृष्णिकासु सलिलं कदाचित्पिबेत् । कदाचित्पृथ्वीं पर्यटन् शशस्य विषाणं=शृङ्गं । 'विषाणं पशुशृङ्गे स्यात्क्रीडाद्विरददन्तयोः' रिति विश्वः । प्राप्नुयात् । एवमघटितघटनं भविष्यति परन्तु प्रतिनिविष्टमूर्खजनस्य चित्तं न आराधयेत् ॥ ५ ॥

व्यालं बाल मृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते,
छेत्तुं वज्रमणीञ्छिरीषकुसुमप्रान्तेन सन्नह्यते ।
माधुर्यं मधुविन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः ॥

व्यालमिति । व्यालं सर्पं बालमृणालतन्तुभिः कोमलतन्तुभिः रोद्धुमवरोद्धु यथा वाञ्छति । यथाच वज्रमणीन् शिरीषपुष्पाग्रेण सच्छिद्रान् कर्तुं सन्नद्धो भवति । यथाच क्षारसमुद्रस्य मधुविन्दुना माधुर्यं कर्तुमीहते चेष्टते एवं यथा अघटितानि कर्त्तुमिच्छति, तथा खलान् सतां मार्गे नेतुममृततुल्यैः सूक्तैर्वाग्भिर्वाञ्छति । दुष्टा सन्मार्गे नेतुं न शक्यन्ते इत्यर्थः ॥ ६ ॥

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥ ७ ॥

स्वायत्तमिति । अपण्डितानां मूर्खाणामज्ञताया मौर्ख्यस्य छादनमाच्छादनं मौनं विधात्रा ब्रह्मणा निर्मितम् । कथंभूतं मौनम् ? । एकान्तगुणं=रहस्यं । तदेव मौनं सर्वविदां सर्वज्ञानिनां समाजे सभायां विशेषतो भूषणं भवति ॥ ७ ॥

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा 'सर्वज्ञोऽस्मी' त्यभवदवलिप्तं मम मनः ।

यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं
तदा 'मूर्खोऽस्मी'ति ज्वर इव मदो मे व्यपगतः ॥ ८ ॥

यदेति । यदा यस्मिन्काले किञ्चिज्ज्ञोऽहमपि किञ्चिज्जानामि इति द्विप इव करीव मदान्धः समभवम् जातोऽस्मि । यदा तस्मिन्काले 'अहमपि सर्वज्ञ' इति मन्यमानस्य मनोऽवलिप्तं गर्वितमभवत् । तदुपरि यदा बुधजनस्य पण्डिस्य सकाशादवगतं पण्डितेभ्यः किञ्चित् किञ्चिज्ज्ञातं तदाऽहं मूर्खोऽस्मीति ज्ञातम् । पूर्वं यो मदः अभवत्सोऽपि ज्वर इव मम व्यपगतः ॥ ८ ॥

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम् ।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ९ ॥

कृमीति । क्षुद्रो जनः पार्श्वस्थमपि सुरपतिं विलोक्य हि इति निश्चयेन न शङ्कते न गणयति । निन्द्यकर्म करोत्येव । यथा श्वा नरस्य अस्थि कृमिकुलैर्युक्तं लालया लुलितं विगर्हितमपवित्रं जुगुप्सितं निन्द्यं निरुपमरसं निरामिषं मांसरहितं एतादृशमपि प्रीत्या खादन्न लज्जते । तद्वत्क्षुद्रो नीचो जन्तुः परिग्रहस्य फल्गुतां= निःसारतां न गणयति न लज्जते ॥ ९ ॥

शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अधोधो गङ्गेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ १० ॥

शिर इति । विष्णुपादोदकमादौ शार्वं शर्वो महादेवस्तस्येदं शार्वं शिरः तत्प्रति स्वर्गात्पतति । शिरसः महीध्रं पर्वतं, महीध्रादुत्तुङ्गात् पर्वतमस्तकात् अवनिं

पृथ्वीं, अवनेश्चाऽपि जलनिधिं सुमुद्रम्। एव जलमधोधः पदं स्थानं। सा इयं गङ्गा स्तोकं क्षुद्रं पदं शतमुखैः सादरं प्राप्ता। एवं विवेकभ्रष्टानाम् अविवेकिनां अधःपतनं गङ्गाजलवत् भवतीत्यर्थः ॥ १० ॥

शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो,
नागेन्द्रो निशिताङ्कुशेन समदो, दण्डेन गोगर्दभौ।
व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं,
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥

शक्य इति। जलेन हुतभुक् अग्निः वारयितुं शक्यः। छत्रेण सूर्यातपः उष्णं वारयितुं शक्यम्। नगेन्द्रो हस्ती समदः निशितेन अङ्कुशेन तीक्ष्णेन वारयितुं शक्यः। दण्डेन गोवृषभौ गर्दभो वा। भेषजेन औषधविधिना नियमेन व्याधिर्वा मन्त्रप्रयोगैर्विषं वा। एवं सर्वशास्त्रविहितमौषधं निरसनप्रकारोऽस्ति। परन्तु मूर्खस्य मूर्खवत् निरसनरूपं कुत्राप्यौषधं नास्तीति ॥ ११ ॥

साहित्यसङ्गीतकलाविहीनः
साक्षात्पशुः पुच्छाविषाणहीनः।
तृणं न खादन्नपि जीवमान-
स्तद्भागधेयं परमं पशूनाम् ॥ १२ ॥

साहित्यमिति। साहित्यसङ्गीतस्य कलानाम् अनभिज्ञः ज्ञानं नास्ति एवंभूतो यो नरः स पुच्छविषाणरहितः साक्षात्पशुरेव। तर्हि यदा पशुस्तदा तेन तृणं भक्षणीयं तत्तु न खादति जीवत्यपि। इदन्तु परममुत्कटं पशूनां भागधेयमदृष्टम् ॥ १२ ॥

येषां न विद्या, न तपो, न दानं,
ज्ञानं न, शीलं, न गुणो, न धर्मः।
ते मर्त्यलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥ १३ ॥

येषामिति । येषां न विद्या न तपो न दानं न शील सद्वृत्तं तदापि न गुणः सत्त्वगुणो न धर्मः एवंभूता ये मनुष्यास्तेऽस्मिन्मर्त्यलोके भुवि भारभूताः सन्तो मनुष्यरूपेण मृगा एव विचरन्ति ॥ १३ ॥

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।
न मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि ॥ १४ ॥

वरमिति । पर्वतदुर्गेषु वनचरैः व्याघ्रादिभिः सह भ्रमणं वरमुत्कृष्टम् । परन्तु मूर्खजनसम्बन्धः इन्द्रभवनेष्वपि मास्त्विति ॥ १४ ॥

इति अज्ञनिन्दाप्रसंगे ॥

## ❀ अथ विद्वत्प्रशंसा ❀

शास्त्रोपस्कृतशब्दसुन्दरगिरः, शिष्यप्रदेयागमा,
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।
तज्जाड्यं वसुधाधिपस्य, कवयो ह्यर्थं विनापीश्वराः,
कुत्स्याः स्युःकुपरीक्षका हि मणयो यैरर्घतः पातिताः ॥ १५ ॥

शास्त्र इति । व्याकरणाभिधानादिभिः शास्त्रैरुपस्कृताः शिक्षिताः शब्दास्तैः सुन्दर गीर्वाणी येषां ते तथा । किञ्च–शिष्येभ्यः प्रदेयाः पाठिताः आगमा वेदशास्त्राणि यैस्ते तथा च सर्वलोकेषु विख्याताः प्रसिद्धाः कवयः कवित्वं कुर्वाणाः । एवंभूता विद्वांसो यस्य प्रभोर्विषये देशमध्ये वसन्ति । अथ च निर्धनाः धनरहिताः । राजा तान्नैव जानाति परामर्शं नैव गृह्णाति । तद्वसुधाधिपस्य राज्ञः जाड्यं मौर्ख्यं । कवयस्तु सुधियः ते अर्थं विनापि ईश्वराः समर्थाः । यथा महामणयो बहुमूल्यास्ते कुपरीक्षकैः कुत्सितपरीक्षकैः अज्ञात्वा अर्घतो मूल्यतः–पातिताः–

न्यूनमूल्याः कृताः । तर्हि अयं दोषः परीक्षकाणां । मणीनां परीक्षकाः कुत्स्याः स्युः । ते एवं कुत्सिता न तु मणयः ॥ १५ ॥

हर्तुर्याति न गोचरं, किमपि शं पुष्णाति यत्सर्वदा-
प्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं, विद्याख्यमन्तर्धनं
येषां, तान्प्रति मानमुज्झत नृपाः ! कस्तैः सह स्पर्धते ॥ १ ॥

हर्तुरिति । भो नृपाः राजानः येषां विद्याख्यमन्तर्धनं तर्तते तान् प्रति मान-महंकारं उज्झत त्यजत । कथंभूतं विद्याख्यं धनं ? हर्तुः तस्करस्ययत् गोचरं न याति । तस्य दृश्यं न भवति । पुनः कथंभूतं ? किमपि अनिर्वचनीयं शं सुखं पुष्णाति पुष्टिं प्रापयति । पुनः कथं भूतं ? सर्वदा सर्वकालेष्वपि अर्थिभ्यः शिष्येभ्यः प्रतिपाद्यमानं दत्तम् परामुत्कृष्टां वृद्धिं प्राप्नोति । पुनः कल्पान्तेष्वपि निधनं नाशं न प्रयाति न प्राप्नोति । एतादृशं येषामन्तर्धनं तैः सह कः स्पर्धते= कः स्पर्धां करोति ? ॥

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान्संरुणद्धि ।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ १७ ॥

अधिगतेति । अधिगतः प्राप्तः परमार्थो यैस्तान् प्रति मावमंस्थाः तेषामपमानं माकुरु । तान्प्रति लक्ष्मीः लघुतृणमिव । लक्ष्मीस्तान्नैव संरुण-द्धि=रोद्धुं नैव शक्नोति । अत्र दृष्टान्तः-अभिनवा सुन्दरा मदजललेखा तया श्यामायमानानि गण्डस्थलानि येषां ते एवं भूतानां वारणानां गजानां बिसतन्तुः किं वारणं भवति ? । रोद्धुं शक्नोति ? । अतः पण्डितानां अवज्ञा न कर्त-व्येत्यर्थः ॥ १७ ॥

अम्भोजिनीवनविहारविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्त्तुमसौ समर्थः ॥ १८ ॥

...जनीति । यो यस्य स्वाभाविकः सद्गुणस्तं न कोपि हर्त्तुं शक्नोति । अत्र दृष्टान्तः—अम्भसो जाताः कमलिन्यः तासां वनं तत्र निवासः वसतिः स्थानं तेन विलसदम्भः । तादृशं हंसस्य विलासं विधाता ब्रह्मा नितरामत्यन्तं कुपितश्चेत् विलासमेव हंति । नतु दुग्धजलयोर्भेदविधौ या प्रसिद्धा वैदग्धी चातुर्यं कीर्तिस्तां ब्रह्मापि हर्तुं न समर्थः तत्र इतरेषां का वार्ता ? ॥१८॥

केयूराणि न भूषयन्ति पुरुषं, हारा न चन्द्रोज्ज्वला,
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्द्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते,
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १९ ॥

केयूरेति । केयूराः बाहुभूषणानि चन्द्रवदुज्वलाः मुक्ताफलानां हाराः शुद्धं स्नानं विलेपनं गन्धादिकं कुसुमं पुष्पञ्च, अलङ्कृताः सज्जीकृता भूषिता मूर्धजाः केशाः एते पदार्थाः पुरुषं न भूषयन्ति । यदा मौर्ख्यं पुरुषस्यास्ति तदा एभिः किं भूषणं भवति ? । तर्हि किम् ? एका वाक् सम्यक् प्रकारेण अलंकरोति शोभयति । सापि या वाक् संस्कृता पुरुषेण धार्यते । सकलानि विभूषणानि क्षीयन्ते एकं वाग्भूषणं न क्षीयते अतः सततं सर्वकालं वाग्भूषणमेव भूषणम्

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं, धनं,
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने, विद्या परंदैवतं,
विद्या राजसु पूज्यते न हि धनं, विद्याविहीनः पशुः ॥२०॥

विद्येति । पुरुषस्य विद्याव्यतिरिक्तं धनं तद्धनं भवति तत्क्षीयते तस्करादिभिर्नीयते गोप्यं न भवति । अतोविद्या नाम धनं तत्समीचीनं वहुगुणम् । कथंभूतं विद्याख्यं धनं ?। नरस्य अधिकं रूपं करोति । तथा च प्रच्छन्नं गुप्तं धनं भवति । विद्या भोगकरी भोगान् करोति । यशः कीर्तिः सुखं करोति । विद्या गुरूणां गुरुः । क्षुद्रगुरवः सर्वविद्यासम्पूर्णं प्राज्ञं प्रष्टुमायान्ति स प्राज्ञः गुरूणामपि गुरुः । अथ च गृणाति हितमुपदिशति इति गुरुरिति गुरुपदव्याख्यानम् । अतो हितकर्त्री विद्यैव । विदेशगमने विद्याबन्धुजनः । विदेशे ये जनास्ते विद्यया स
न्धुजना इव भवन्ति । विद्या परं दैवतम् । विद्यैव राजसु पूजिता । येषां वि
ते राज्ञां सभायां पूजिता भवन्ति । तथा धनाढ्याः पूजिता न भवन्ति अतो विद्याहीनो यः स पशुरेवेति ॥

इति प्राचीनटीकानुसारेण संक्षिप्ता प्रश्नोत्तरलेखनपद्धतिः ।

शुभं भूयात्



प्रकाशक—
भार्गव पुस्तकालय, गायघाट, बनारस ।
[ ब्रांच—कचौड़ीगली, बनारस ]

मुद्रक–पं० बैकुण्ठनाथ भार्गव, आनन्दसागर प्रेस, गायघाट, बनारस ।

# 'कुण्डली दर्पण'

## ( लेखक—पं० श्रीअनूपमिश्र कृत )

यह पुस्तक जन्मकुण्डली बनाने के लिए अत्यन्त उपयोगी है
इसके सहारे थोड़े पढ़े लिखे लोग भी आसानी से कुण्डली की स
बातों को जानकर सुविशद कुण्डली बना सकते हैं। इसकी विशेष
एक बार दृष्टिगोचर होने पर स्वयं प्रत्यक्ष हो जायगी। इस सं
के अनेक निबन्ध रहने पर भी एक अनुभवी विशिष्ट विद्वान के द्वा
'कुण्डलीदर्पण' का विरचन कराया गया है ताकि साधारण पुरो
आदि लोग भी सफलता प्राप्त कर सकें। मूल्य १।।)

# फलित संग्रह

संस्कृत जाननेवाले विद्वान् पौराणिक तथा अन्यान्य शास्त्रवेत्ताओं को भ
ज्यौतिषशास्त्र से काम लेना पड़ता है, बिना ज्यौतिषशास्त्र के गृह, कूप, तड़ाग
विवाह ग्रह आदिकों के इष्टानिष्ट फल जानने की आवश्यकता पड़ती है। इनके
उपयोग के लिये फलितसग्रह एक ऐसा उत्तम ग्रन्थ छपा है कि जिसे समर्घ
महर्घ वस्तु आदि विवाह कर्मों का फल भली-भाँति मालूम होता है। प्रत्येक
मनुष्यों को इसकी एक-एक प्रति अपने पास रखना आवश्यक है। मूल्य १)

# द्विरागमन व्यवस्था

## लेखक—ज्यौतिषाचार्य पं० रामयत्न ओझा

आजकल द्विरागमन और वधूप्रवेश में इतने झगड़े चले हैं कि जि
निर्णय होना कठिन प्रतीत हो रहा है। उसका ज्यौतिषशास्त्र के सिद्धान्तों
अति प्रयत्न से निर्णय करके द्विरागमन व्यवस्था नामकी यह पुस्तक प्रकाशि
की गई है। यह ग्रन्थ ऐसा उत्तम है कि जिसकी विशेष प्रशंसा देखने से स्वय
लोग करते हैं। सर्वसाधारण के रखने योग्य है। मूल्य ।≡)